# ANNOUNCING THE



**The first six books, splendid in their content,**
**press, marking the Golden Jubilee of Chanda**




A novelette on three lads befriending an unusual stranger – and their strange adventure, in a village turned into an island by flood.




A fairytale novella opening up into fascinating worlds and introducing gripping characters – rich with 42 imaginative illustrations.




A second selection of stories from the immortal Jatakas, unforgettable for their moral, wit, and wisdom.

**How to get the books at an easy price.**

If you are a subscriber to Chandamama (in any language) between the ages of 6 and 16, you are eligible to the membership of the Chandamama Young Scholars' Club. If you subscribe to Chandamama (in any language) before May 1996, the offer is open to you. You can fill up the form given here on the right side and mail it to us, while sending a




token fee of Rs. 50. either by M.O. or by a bank draft drawn in the name of CHANDAMAMA YOUNG SCHOLARS' CLUB. You can then order all or any number of these books at much less than their original price. You get a handy gift of a School Companion Note Book and a decent badge.

What is more; you can participate in talent contests and different activities which the Club proposes to hold in the future.

# CHANDAMAMA BOOKS

**illustrations and production—are soon to roll out of the mama. Written by: Manoj Das. Illustrated by Sisir Datta**




A selection of legends and parables, some of which are believed to have been narrated by the Buddha, their radiance even now undiminished.




A garland of gems from the great treasure of India's folklore and ancient fiction. Each story has a message, as relevant today as it was ever before.




An invitation into the delightful world of ancient tales, legends and parables. Each story enriches us with prudence and helps us understand life better.

**MEMBERSHIP FORMALITIES WILL BE PROCESSED ONLY BY END OF FEBRUARY 199**

MEMBERSHIP CARD







BADGE

NOTE BOOK

Dear Sir,

Please enrol me a member of the Chandamama Young Scholars' Club.

My Chandamama subscription No. is.............................

I am sending my Membership fee of Rs. ..................... by M.O./Draft.

I look forward to my acceptance - gift.

Full Name : ............................................................ Signature

Name of Parents : ............................................................

Mailing Address : ............................................................

Permanent Address : ............................................................

Date of Birth : ............................................................

Class : ..................... School............................................





# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'


## परीक्षाणां सम्मुखीकरणम्



मार्चमासस्य मध्यभागे परीक्षाणाम् आयोजनस्य या प्रथा भारतस्य बहुषु भागेषु प्रचलति, सा प्रायः चत्वारिंशद्वर्षेभ्यः पूर्वम् आरब्धा । मार्च्मासः छात्राणां जागरूकताकालः । अतः एव मार्च्विषये 'जूलियस्सीसर्'नामके शेक्स्पीयर्नाटके प्रयुक्तम् एकं वाक्यं बहुधा उपयुज्यते - 'मार्च्मासस्य दिनानां विषये जागरूकता भवतु' इति । दैवज्ञेन पण्डितेन जूलियस्सीसराय यद्यपि एषा सूचना दत्ता आसीत्, तथापि साम्राज्यविस्ताराकाङ्क्षी जूलियस्सीसरः नयवञ्चकैः स्वजनैः कृतायाः वञ्चनायाः कारणतः मरणं प्राप्तवान् । दैवज्ञस्य पूर्वसूचना सीसर्वर्येण कथम् उपेक्षया दृष्टा इत्येतम् अंशम् एतत् नाटकम् इतिहासः च ज्ञापयति ।

शेक्स्पीयर्वर्यस्य एतत् वचनं बहवः च्छात्राः मार्च्मासे गाम्भीर्येण परिगणितवन्तः दृश्यन्ते । परीक्षारम्भात् पूर्वं सप्ताहं यावत् ते अहोरात्रं पठन्ति । तथापि परीक्षा तेषु दिग्भ्रान्तिं जनयति । किमर्थम् एवं भवति ? यतः परीक्षातः पूर्वं पूर्वसन्नाहार्थं पक्षात्मकः (ततोऽप्यधिकः वा) विरामः दीयते एव । स च विरामः सर्वविषयाणाम् अपि पुनःस्मरणार्थं तु निश्चयेन पर्याप्तः ।

पुनःस्मरणं तर्हि एव सम्भवति यदि आवर्षं योजनाबद्धरूपेण अध्ययनं कृतं भवति । ये विषयाः गुरुभिः बोधिताः, ये च सकृत् मनसि स्थापिताः, परीक्षातः पूर्वं तेषां पुनःस्मरणं न कठिनम् । पाठ्य-पुस्तकटिप्पण्यादीनां परिशीलनात् पुनःस्मरणं सिद्धं भवति ।

आवर्षं पठनकाले यदि विषयाः मनसि न आरोपिताः स्युः तर्हि कस्य वा निन्दनं करणीयम्, ऋते आत्मनः ? परीक्षातः पूर्वं दीयमानस्य विरामस्य सदुपयोगः तदा एव प्राप्येत यदि आवर्षम् अध्ययनविषये समीचीना योजना कृता भवेत् । यैः आवर्षं परिश्रमः कृतः भवति ते निश्चयेन परीक्षायां साफल्यं प्राप्तुम् अर्हन्ति ।

वार्षिकीं परीक्षां सम्मुखीकर्तुम् उद्युक्ताः सर्वे साफल्यं प्राप्नुयुः इति आशास्महे वयम् ।




सम्पुटः - १२ मार्च् - १९९६ सञ्चिका - १२

प्रतिकृतिमूल्यं रू. ५.०० ♦ वार्षिकं ग्राहकशुल्कं रू. ६०.००




**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | MONTHLY<br>Ist of each calender month |
| *3. Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | B.VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | B.NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum. B.L. ARCHANA<br>9. Kum. B.L. ARADHANA<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

**B. VISWANATHA REDDI**
*Signature of the Publisher*

1st March 1996

अनुभवति'' इति राजा उक्तवान् ।

एतत् श्रुत्वा निर्धनः उक्तवान् - ''भवतः वचनं सत्यम् अस्ति । परन्तु कर्तव्यभारस्य निर्वहणे मम इच्छा नास्ति । तत् नास्ति चेदेव अधिकं सुखं लभ्यते । धनं तु अद्य भवति, श्वः व्ययितं च भविष्यति । सर्वविधकीर्तेः पृष्ठभागे अपकीर्तिः भवति । तथापि महाराजत्वप्राप्तौ मम महती इच्छा । तत्र कारणं - यदि अहं महाराजः भविष्यामि, तर्हि सर्वे मम प्रशंसां करिष्यन्ति । तेन मम आनन्दः भविष्यति । महाराजम् अधिकृत्य कवयः कविताः रचयन्ति । परन्तु सामान्यजनानां तादृशं भाग्यं न भवति'' इति ।

तस्य वचनानि श्रुत्वा महाराजः हसन् उक्तवान् - ''तावदेव खलु ! तादृशं भाग्यं भवान् यथा प्राप्नुयात् तथा व्यवस्थाम् अहं करिष्यामि'' इति ।

तदा निर्धनः उच्चैः हसन् - ''अलम् अवास्तविकं विषयम् अधिकृत्य वार्तालापेन । भवान् जागरूकतया चलतु । तेनैव मम सन्तोषः भवति'' इति उक्त्वा ततः गतवान् ।

महाराजः अपि तम् अनुसृतवान् । तत्र निर्धनस्य एकः कुटीरः आसीत् । तस्मिन् कुटीरे सः एकः एव वसति स्म ।

अनन्तरदिने महाराजः कश्चित् कविं तस्य निर्धनस्य गृहं प्रति प्रेषितवान् । स्वगृहम् आगतवन्तं कविं दृष्ट्वा निर्धनः आश्चर्येण पृष्टवान् - ''स्वामिन् ! भवतः आगमनस्य



कारणं किम् ?'' इति ।

''भवन्तम् उद्दिश्य काव्यं लेखितुम् अहम् आगतः'' इति कविः उक्तवान् ।

तदा निर्धनः आनन्देन पृष्टवान् - ''माम् उद्दिश्य काव्यं लिखति वा भवान् ? तत्र मम कीदृशं वैशिष्ट्यं वर्ण्यते ?'' इति ।

''तदेव मया निर्णेतव्यम् । अतः प्रथमं भवान् स्वस्य विषयं वदतु । तदा भवतः वैशिष्ट्यं ज्ञातुं शक्ष्यामि अहम्'' इति कविः उक्तवान् ।

तदा निर्धनः स्वविषयम् एवम् उक्तवान् - ''बाल्ये एव मम पिता मृतः । मम दशमे वयसि माता अपि मृता । तदा ग्रामजनाः स्वगृहेषु मम पोषणं न इष्टवन्तः । परन्तु केचन गण्याः ग्रामात् बहिः एकं कुटीरं



निर्माय मह्यं दत्तवन्तः । अहम् अरण्यं गत्वा काष्ठानि आनीय तेषां विक्रयणं कृत्वा जीवन् अस्मि'' इति ।

कविः पृष्टवान् - ''भवान् प्रतिदिनम् अरण्यं गच्छति किल ! तत्र साहसघटनां कामपि दृष्टवान् वा ?'' इति ।

निर्धनः उक्तवान् - ''एकवारम् एव एकं शृगालम् अहं दृष्टवान् । तस्मात् भीतः अहं धावितवान् । अनन्तरं दिनद्वयम् अहम् अरण्यं न गतवान् एव । परन्तु अरण्यं न गच्छामि चेत् कथं जीवननिर्वहणं भवेत् ? अतः पुनः अरण्यं गच्छन् अस्मि'' इति ।

''भवति सहानुभूतेः लक्षणम् अस्ति । अतः एव भवान् अन्येषां साहाय्यं करोति खलु !'' इति कविः पृष्टवान् ।

तदा निर्धनः दीर्घं निःश्वस्य - ''मम अपि बहु कष्टम् अस्ति । एवं सति अन्येषां साहाय्यं कथं करोमि ? परन्तु समये प्राप्ते निश्चयेन साहाय्यं करोमि । किन्तु तत्र दया करुणा वा न कारणम् । भगवान् वेषपरिवर्तनं कृत्वा भक्तानां परीक्षां करोति इति श्रूयते । तादृशपरीक्षासु अहम् उत्तीर्णतां प्राप्य तस्य आदराभिमानं प्राप्तुम् इच्छामि'' इति उक्तवान् ।

कविः तत्सर्वम् अनिच्छन् इव शिरः चालयन् पृष्टवान् - ''विरामसमये अन्यत् किमपि करोति वा भवान् ? काव्यं किमपि पठति वा ?'' इति ।

तदा निर्धनः उक्तवान् - ''प्रातःकालतः परिश्रमेण कार्यं करोमि । यदा पठितुम् उद्युक्तः भवामि तदा निद्रा मां बाधते'' इति ।

तत् श्रुत्वा - ''भवान् पठितुं लेखितुं वा जानाति वा ?'' इति पुनः पृष्टवान् कविः ।

तदा निर्धनः गर्वेण उक्तवान् - ''किमर्थं न जानामि ? काव्यानि पठित्वा अहम् अर्थं ज्ञातुं शक्नोमि एव'' इति ।

कविः आश्चर्येण उक्तवान् - ''एतदपि एकं वैशिष्ट्यम् एव । भवान् अपि काव्यानि पठित्वा अर्थम् अवगच्छति इत्येषः प्रशंसनीयः विषयः'' इति ।

निर्धनः - ''तादृशं सामर्थ्यं यदि न स्यात् तर्हि मम विषये यः कोऽपि यदि काव्यं लिखेत् तर्हि अहं कथम् अर्थं ज्ञातुं शक्नुयाम् ?'' इति पृष्टवान् ।

तदा कविः असहनया - ''भोः मूर्ख ! सर्वविषयेषु अपि भवान् दरिद्रः एव । भवतः विषये काव्यं लेखितुम् अहम् आगतवान् किल ! तत् मम मूर्खत्वम्'' इति उक्त्वा आनीते ताडपत्रे लघु काव्यमेकं लिखितवान् । तत् काव्यं निर्धनाय दत्त्वा ततः निर्गतवान् च ।

निर्धनः काव्यं पठितवान् । तस्मिन् शतं पद्यानि आसन् । सर्वाणि अपि निर्धनम् अधिकृत्य रचितानि आसन् । तदा आरभ्य निर्धनः कुटीरस्य पुरतः विद्यमानस्य वृक्षस्य अधः लघुदीपं संस्थाप्य मार्गे गच्छतः सर्वान् आहूय पद्यानि श्रावयति स्म । गर्वेण वदति स्म च - ''एतत् काव्यं कम् अधिकृत्य लिखितम् इति जानन्ति वा भवन्तः ? माम् अधिकृत्य लिखितम् अस्ति एतत्'' इति ।

एतत् श्रुत्वा सर्वे वदन्ति स्म - ''यः एतत् काव्यं लिखितवान् सः प्रतिभाहीनः निर्धनः वा कविः स्यात् । तस्य कवेः एतादृशी दुर्गतिः आगता चेत् तस्य कारणं राजा । अतः एतस्य राज्यस्य महाराजः अपि तर्जनीयः'' इति ।

एतत्सर्वं वृत्तान्तं महाराजः तदा तदा जानाति स्म । एकस्यां रात्रौ महाराजः यथापूर्वं वेषपरिवर्तनं कृत्वा, निर्धनः यस्य वृक्षस्य अधः उपविष्टवान् तस्य वृक्षस्य समीपम् आगतवान् । सः उद्देशपूर्वकं निर्धनस्य समीपे पतितवान् । परन्तु इदानीं निर्धनः महाराजं न उत्थापितवान् । किञ्चित्समयानन्तरं महाराजः स्वयमेव उत्थाय निर्धनस्य समीपं गतवान् । उक्तवान् च - ''पूर्वं यदा भवान् मम साहाय्यं



कृतवान् तदा भवतः अपेक्षा पूर्णा जाता । इदानीं पुनः यदि भवान् मम साहाय्यं कृतवान् स्यात् तर्हि अहं पुनः अपि भवतः अपेक्षां पूरयेयम् । उत्तमावकाशात् भवान् वञ्चितः'' इति ।

निर्धनः उक्तवान् - ''किं भवतः अनुग्रहेण ? अहं भवन्तम् उत्तमाम् अपेक्षां न प्रार्थितवान् स्यां नाम । तथापि चतुरः भवान् मम उत्तमापेक्षां पूरयितुम् अशक्ष्यत् एव । किन्तु भवान् तथा न कृतवान् । कविः काव्यं लिखित्वा ददाति चेत् उदरं पूर्णं भवति वा ? तेन लिखितं काव्यं श्रुत्वा सर्वे हसन्तः सन्ति । तं कविं, महाराजं भवन्तं च जनाः निन्दन्तः सन्ति । भवतु नाम । कवेः वा सन्तोषः अभवत् वा ? तदपि न । सः कविः अपि मां तर्जयित्वा, यथाकथञ्चित् काव्यमेकं लिखित्वा, क्षिप्त्वा गतवान् । भवतः आशीर्वादतः कोऽपि सन्तुष्टः न अभवत्'' इति ।

तदा राजा किञ्चित् कोपेन उक्तवान् - ''तस्मिन् दिने भवता एव भवदीया अपेक्षा स्पष्टं प्रकटनीया आसीत्'' इति ।

निर्धनः मन्दस्वरेण उक्तवान् - ''स्वामिन् ! अपेक्षाविषये मानवाः चतुराः न भवन्ति इत्यतः एव भगवान् उपकारचोदकं भावं मानवस्य मनसि उत्पादयति ! मानवः मरणं कदापि न इच्छति । परन्तु मरणम् एव तस्य जीवने अर्थं कल्पयति किल ? मानवः दुःखं मास्तु इति वदति । किन्तु दुःखम् एव नास्ति चेत् सुखस्य अनुभवः कथं भवति ? अतः बहूनि कष्टानि भगवान् मानवेभ्यः दत्तवान् अस्ति । अन्यमानवाः इव सुखमेव इच्छन् अहं भवन्तं प्रार्थितवान् । भवान् वरं दत्तवान् । भवति शक्तिः अस्ति । परन्तु भवान् देवः न । भवतः आशीर्वादतः मम उपकारबुद्धेः नाशः जातः । इदानीम् अन्येषां साहाय्यम् एव न करोमि'' इति ।

निर्धनस्य एतानि वचनानि श्रुत्वा महाराजः अवगतवान् यत् एतस्य वचनेषु सत्यांशः अस्ति इति । अतः अनन्तरदिने एव सः तस्मै निर्धनाय कार्यं दत्त्वा तदीयं जीवनं सुखमयं कृतवान् ।





# नष्टं राजत्वम्

प्राचीने काले विन्ध्यपर्वतप्रदेशे बहूनि लघुराज्यानि आसन् । तेषु अमृतपुरम् अपि अन्यतमम् । अमृतपुरस्य राजा अमरसिंहः। यदा अमरसिंहः बालः आसीत् तदा एव तदीयः पिता वीरसिंहः दिवङ्गतः आसीत् । वीरसिंहस्य अपेक्षा आसीत् यत् पार्श्वस्थानि राज्यानि जित्त्वा चक्रवर्तित्वं प्राप्तव्यम् इति। किन्तु एतदर्थं तदीयं सैन्यबलम् अपर्याप्तम् आसीत् ।

अमरसिंहः कदाचित् सङ्कल्पितवान् यत् पितुः अपेक्षायाः पूरणार्थं मया चक्रवर्तित्वं प्राप्तव्यम् इति । अमरसिंहस्य एतत् चिन्तनं ज्ञात्वा मन्त्री धर्मपालः तं बोधितवान् - ''प्रभो ! राज्यविस्तारणे प्रयत्नः न श्लाघ्यः । प्रजानां हितार्थं यत्नं कुर्वन् भवान् योग्यां वधूं परिणीय सुखेन जीवतु'' इति ।

तदा अमरसिंहः उक्तवान् - ''मन्त्रिवर्य ! अल्पे एव काले प्रभूतं धनं सम्पाद्य अहं सैन्यं सज्जीकृत्य प्रतिवेशिराज्यानि जेष्यामि । तदा कश्चित् महाराजः स्वयं माम् आहूय स्वपुत्रीं दास्यति'' इति ।

अमरसिंहः धनसम्पादनार्थम् एकं तन्त्रं रचितवान् । सः स्वसैनिकान् लघुगणेषु विभज्य सूचितवान् यत् भवन्तः राज्यस्य सीमाप्रदेशेषु स्थितान् ग्रामान् लुण्ठयित्वा धनम् आनयन्तु इति ।

एतदनुगुणं सैनिकाः ग्रामेषु लुण्ठनम् आरब्धवन्तः । तान् अभिजानन्तः ग्रामीणाः स्वराजसमीपं गत्वा निवेदितवन्तः यत् अमृतपुरतः चोराः आगत्य लुण्ठनं कुर्वन्तः सन्ति इति । तदा राजानः - ''चोराणां निग्रहणार्थं यथोचितव्यवस्था क्रियते'' इति उक्त्वा प्रजाः प्रेषितवन्तः ।

ततः लघुराज्येषु अन्यतमायाः वज्रपुर्याः राजा - ''अमृतपुरं गत्वा भवान् वदतु यत्

लुण्ठनार्थं चोराणां प्रेरणं न युक्तम् इति'' इति सन्दिश्य एकं दूतं प्रेषितवान् ।

तदनुगुणं दूतः अमृतपुरं गतवान् । तम् आदरेण स्वागतीकृत्य अमरसिंहः उक्तवान् - ''चोराः मया चोदिताः न । ते मम राज्ये अपि लुण्ठनं कुर्वन्तः सन्ति इति श्रूयते । तेषां निग्रहणार्थं मया निश्चयेन व्यवस्था करिष्यते । एतां वार्तां भवान् भवदीयं प्रभुं वदतु'' इति ।

दूतस्य निर्गमनस्य अनन्तरं मन्त्री धर्मपालः उक्तवान् - ''प्रभो, भवतः व्यवहारः राजनीतिविरुद्धः अस्ति । यदि कदाचित् वस्तुस्थितिः ज्ञायेत तर्हि प्रतिवेशिराजाः अस्माकं राज्यं समूलं नाशयेयुः'' इति ।

तदा राजा उच्चैः हसन् - ''मन्त्रिवर्य ! अलं चिन्तया । यावत् प्रतिवेशिराजाः सम्मिलिताः न भवेयुः ततः पूर्वम् एव अहं धनसङ्ग्रहं कृत्वा सैन्यं सज्जीकृत्य तान् एव निर्मूलयिष्यामि'' इति उक्तवान् ।

ततः मासाभ्यन्तरे गुप्तचरद्वारा वज्रपुर्याः राज्ञा ज्ञातं यत् अमरसिंहस्य चोदनया एव ग्रामेषु लुण्ठनं प्रचलति इत्येतत् सत्यम् एव इति । अतः सः अमृतपुरस्य उपरि हठात् आक्रमणं कृतवान् । अमृतपुरे ये सैनिकाः आसन् ते लुण्ठनार्थं निर्गताः आसन् खलु ? अतः दुर्गस्य रक्षणार्थम् अमृतपुरे सैन्यम् एव न आसीत् ।

अमरसिंहः एतां स्थितिं ज्ञात्वा मन्त्रिणा सह रहस्यमार्गेण पलायनं कृत्वा अरण्यं गतवान् । तत्र मन्त्रिणं पृष्टवान् च - ''मन्त्रिवर्य ! किं करणीयम् इदानीम् ?'' इति ।

तदा मन्त्री शान्तस्वरेण - ''इदानीं न मम मन्त्रित्वम् अस्ति, न वा भवतः राजत्वम् । अन्याय्यं यत् आचरितं तस्य फलम् एतत् । यदि प्राणाः प्रियाः स्युः तर्हि इतः अपि पलायनम् एव इदानीम् उचितः मार्गः'' इति उक्तवान् ।

राजा प्रतिवचनं किमपि अवदन् पर्वतप्रदेशस्थं घनारण्यम् उद्दिश्य ततः निर्गतवान् ।






# ७

(पितृलोके मृतान् वीरान् ग्रीक्जनान् दृष्ट्वा 'साङ्केतिक'नामकेन ज्ञानिना उक्तेन भविष्यद्वचनात् उत्पत्स्यमानानि कष्टानि ज्ञातवान् रूपधरः स्वस्य अनुचरैः सह स्वग्रामं प्रति प्रस्थितवान् । मार्गे नागकन्यातः आत्मानं रक्षन् सः सूर्यभगवतः धेनूनां समूहस्य समीपं गतवान् । 'एताः धेनूः न पीडयामः' इति अनुचरैः यदा उक्तं तदा रूपधरः तस्मिन् द्वीपे विश्रान्तिं प्राप्तुम् अनुमतिं दत्तवान् । अनन्तरम् .....)

ग्रीक्जनैः नौकाः द्वीपस्य समीपे स्थगिताः । ततः ते सर्वे नौकातः अवतीर्य तीरम् आगतवन्तः । तत्रैव समीपे एकं सरोवरम् आसीत् । तत्रत्यं जलं बहु मधुरम् आसीत् । सर्वे तत्रैव पाकं कृत्वा भोजनं कृतवन्तः । विध्वंसिनी यत् घोरं कृत्यं कृतवती आसीत् तत् स्मरन्तः ते तत्रैव निद्रितवन्तः ।

तस्यां रात्रौ त्रिवादनसमये भयङ्करः झञ्झावातः आरब्धः । मेघाः सम्मिलिताः अभवन् । दक्षिणदिक्तः वायुः वेगेन वाति स्म । ग्रीक्जनाः नौकाः ततः आकृष्य कस्याञ्चित् गुहायां स्थापितवन्तः ।

तदा रूपधरः - "मित्राणि ! अस्माकं नौकायाम् आहारः पानीयं च प्रभूतम् अस्ति । अतः वयम् एताः धेनूः न पीडयामः । एताः धेनवः सूर्यभगवतः । यदि वयं तं वञ्चयामः तर्हि प्राणैः वियुक्ताः



भवेम । अतः सावधानेन व्यवहरन्तु'' इति अनुचरान् बोधितवान् ।

रूपधरस्य अनुचराः अपि तथा मरणं प्राप्तुम् न इष्टवन्तः । अतः ते सर्वे नायकस्य आज्ञां पालितवन्तः । मासं यावत् झञ्झावातः निरन्तरं वाति स्म । नौकायां विद्यमानः सर्वः अपि आहारः समाप्तः अभवत् । पानीयम् अपि समाप्तम् अभवत् । ग्रीक्जनाः आहारार्थम् आकाशे सञ्चरतः पक्षिणः गृहीतवन्तः, समुद्रस्थान् मीनान् चापि गृहीतवन्तः । तथापि तेषां बुभुक्षा शान्ता न अभवत् ।

एतत् ज्ञात्वा रूपधरः चिन्तितवान् यत् देवताः प्रार्थनीयाः इति । सः सर्वान् अनुचरान् त्यक्त्वा द्वीपस्य अन्तः यत्र झञ्झावातः न आसीत् तत्र गतवान् । प्रशान्ते स्थले उपविश्य ध्यानासक्तः सः तत्रैव निद्रां प्राप्तवान् ।

तावति काले गुहातः बहिरागतः मायावी तत्रत्यान् अन्यान् ग्रीक्जनान् - ''मित्राणि ! भवन्तः इदानीं शोचनीयां स्थितिं प्राप्तवन्तः सन्ति । अतः मम वचनानि शृण्वन्तु । बुभुक्षा सहनयोग्या न भवति । अतः भवन्तः निर्भीकाः भवन्तु । एताः धेनूः गृह्णीमः । यदा इथाकां प्राप्स्यामः तदा सूर्यभगवतः एकं विशालं देवालयं निर्मास्यामः । सम्प्रदायरीत्या स्वर्गे विद्यमानाभ्यः देवताभ्यः बलिं दत्त्वा वयम् अपि खादित्वा प्राणधारणं करिष्यामः । सूर्यभगवतः कोपेन, अन्यासां देवतानां तिरस्कारेण च यदि वयम् अग्रे समुद्रमध्ये निमज्जिताः भवेम, तर्हि तदपि वरम् एव । यतः तथा जातं चेत् प्रापञ्चिकक्लेशात् मुक्तिः वा प्राप्ता भवेत् । अस्मिन् निर्जने प्रदेशे बुभुक्षया मरणात् समुद्रे मरणं वरम्'' इति उपदिष्टवान् ।

मायाविनः वचनेन प्रभाविताः ते रूपधरस्य अनुचराः निःसङ्कोचतया सर्वं सज्जीकृत्य अरण्यं प्रति गतवन्तः । तत्रत्याः सूर्यभगवतः धेनूः गृहीत्वा आनीतवन्तः । ततः शास्त्रोक्तप्रकारेण देवताभ्यः ताः बलिरूपेण अर्पयित्वा ते तासां मांसं पक्तुम् उद्युक्ताः अभवन् ।

तावति काले रूपधरः जागरणं प्राप्य अनुचराणां समीपम् आगतवान् । यदा सः

तीरम् आगतवान् तदा तेन ज्ञातं यत्अनुचराः धेनूः मारयित्वा मांसं पचन्तः सन्ति इति, एते सूर्यभगवन्तं धिक्कृतवन्तः सन्ति इति च । भाविनं दुष्परिणामं स्मरन् दुःखं खेदं च अनुभवन् रूपधरः अनुचरान् नानाविधैः कटुवचनैः भर्त्सितवान् । परन्तु अकार्यं तु कृतम् आसीत् एव । पश्चात्तापेन कोऽपि लाभः न आसीत् ।

गोमांसेन निर्मितम् आहारं ते षड् दिनानि यावत् खादितवन्तः । सप्तमे दिने झञ्झावातः स्थगितः अभवत् । अनुक्षणं रूपधरः, तस्य अनुचराः च नौकाः समुद्रे स्थापितवन्तः, ततः अग्रे प्रयाणम् अनुवर्तितवन्तः च । ततः ते बहुदूरं गतवन्तः ।



इदानीं ते समुद्रस्य मध्यभागे सन्ति । कुत्रापि भूमिः न दृश्यते । उपरि आकाशः अधः परितः च जलं दृश्यते । तस्मिन् समये आकाशे एकः विशालः मेघः उद्भूतः अभवत् । पश्चिमदिक्तः प्रलयकालसदृशः झञ्झावातः आगतः । तस्य वायोः आघातेन नौकायाः मूलस्तम्भः भग्नः सन् नाविकस्य उपरि पतितः । तेन सः मृतः अभवत् । तत्समये एव एकः अशनिः नौकायाम् अपतत् । तेन आघातेन नौका छिद्रा अभवत् । रूपधरस्य अनुचराः सर्वे समुद्रे पतितवन्तः । परन्तु धैर्यच्युतिम् अप्राप्नुवन् रूपधरः नौकायाः एकस्मिन् काष्ठखण्डे वस्त्रस्तम्भं बद्धवान् । तदा पश्चिमदिक्तः यः वायुः वाति स्म, सः स्थगितः अभवत् । इदानीं दक्षिणदिक्तः वायोः आगमनस्य आरम्भः अभवत् । तदा रूपधरः चिन्तितवान् यत् इदानीम् अहं पुनः जलस्य आवर्तानां मध्ये पतिष्यामि । अथवा विध्वंसिनी नाम राक्षसी मां ग्रहीष्यति इति । तेन यथा चिन्तितं तथैव नौका जलस्य आवर्तस्य समीपे आगता । परन्तु भाग्यवशात् सः तयोः द्वयोः अपाययोः रक्षितः अभवत् ।

एवमेव रूपधरः नव दिनानि यावत् वायुना बहुदूरं नीतः । दशमे दिने रात्रौ 'ओगीजिया'नामके द्वीपे सः अपतत् । तस्मिन् द्वीपे विद्यमानायां गुहायां सम्मोहिनीनामिका काचित् देवता वसति स्म । गुहां परितः विद्यमानः परिसरः



अत्यन्तं मनोहरः आसीत् । लघुसस्यानां समूहः अपि आसीत् तत्र । तत्परितः हरिद्वर्णयुक्तम् अङ्गणम् आसीत् । समीपे एव निर्मलं सरोवरम् आसीत् । गुहायाः द्वारे द्राक्षालता आसीत् । लतायां द्राक्षाफलानि आसन् । रूपधरः तस्मिन् द्वीपे पदं स्थापयन् मन्दम् अग्रे गतवान् । सम्मोहिनी तं स्वागतीकृतवती । गुहां नीतवती च । तस्मै आहारं पानीयं च दत्तवती ।

यदा सः आहारपानीयस्वीकारेण शक्तिं प्राप्तवान् तदा सा तम् उद्दिश्य - ''यदि भवान् मां परिणीय अत्रैव स्थितिम् अङ्गीकरोति, तर्हि मरणं वार्धक्यं च भवतः यथा न भवेत् तथा करोमि अहम्'' इति आश्वासनं दत्तवती ।

'एतस्मिन् द्वीपे एतस्याः वचनं तिरस्कृतं चेत् किमपि कर्तुं न शक्यते' इति चिन्तयित्वा रूपधरः तां परिणीतवान् । तया सह पञ्च वर्षाणि वासं कृतवान् च । परन्तु दिनेषु गच्छत्सु स्वदेशगमनाय तस्य मनसि प्रबला इच्छा उत्पन्ना । सः आदिनं समुद्रतीरे मौनम् उपविशति स्म ।

सम्मोहिनी रूपधरस्य एतां स्थितिं ज्ञातवती । स्वदेशदर्शनचिन्तनात् एतं विमुखं कर्तुं न शक्यते इति चिन्तयन्ती सा तस्य समीपम् आगत्य उक्तवती - ''भवतः दशां दृष्टवत्याः मम मनसि करुणा उत्पन्ना अस्ति । भवन्तं भवतः देशं प्रेषयितुं निश्चितवती अस्मि । भवान् उत्तमान् वृक्षान् कर्तयित्वा योग्याम् एकां नौकां सज्जीकरोतु । भवतः निमित्तम् आहारं पानीयं च अहं व्यवस्थापयामि । तथैव उत्तमं वायुं वस्त्रं च दास्यामि । तेन भवान् स्वदेशं प्राप्नोतु'' इति अवदत् ।

सम्मोहिन्याः वचनानि श्रुतवतः रूपधरस्य शरीरं रोमाञ्चितम् अभवत् । सम्मोहिन्याः निराधारवचनानि श्रुत्वा आश्चर्यचकितः सः अवदत् - ''अत्र कापि वञ्चना अस्ति । नो चेत् एतस्य महासागरस्य अन्यत् पारं लघुना उडुपेन गन्तुं भवती न असूचयिष्यत् । उत्तमया महानौकया एव गन्तुं न शक्यते । एवं स्थिते लघुनौकायाः का कथा ? अतः भवत्या आश्वासनं दातव्यं यत् पूर्णमनसा साहाय्यं करोमि इति'' इति ।

"भवान् अन्यथा चिन्तितवान् । भवादृशाः लोके बहवः सन्ति । ते अन्येन उक्तं न अङ्गीकुर्वन्ति एव । यतः ते अस्मान् सहृदयतया न पश्यन्ति । तेषां हृदयवैशाल्यं नास्ति । तेषु अन्यतमः भवान् । अतः भवति संशयः उत्पन्नः । भवतः साहाय्यं करणीयम् इत्येव मम अपेक्षा अस्ति । मम हृदयं कठोरम् इति चिन्तितवान् वा भवान् ? न मयि कठोरता अस्ति, न वा वञ्चनाभावना । भवतः स्थितिं दृष्टवत्याः मम मनसि करुणा उत्पन्ना अस्ति" इति सम्मोहिनी रूपधरम् उक्तवती ।

सम्मोहिनी रूपधरं गुहां प्रति नीतवती । विविधानि भक्ष्याणि दत्तवती च । "गृहं गन्तव्यम् इति भवतः या इच्छा अस्ति सा उत्तमा एव । परं मार्गे सम्पत्स्यमानानि कष्टानि यदि भवान् जानीयात् तर्हि अत्रैव तिष्ठेत् । अतः चिरञ्जीवी जरावर्जितः सन् भवान् अत्रैव तिष्ठतु इति मम अपेक्षा । भवतः हितं मनसि निधाय एव मया एवम् उक्तम् । अतः भवान् अत्रैव तिष्ठतु" इति रूपधरम् अनुरोधपूर्वकम् उक्तवती ।

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी इति वचनं न श्रुतं वा भवत्या ? स्वस्थानं गन्तव्यम् इति मम इच्छा प्रबला अस्ति । इतःपूर्वं बहूनि कष्टानि मया सम्मुखीकृतानि एव । यदि अहं प्रयाणकाले समुद्रे निमज्जितः भवेयं तर्हि तदपि वरम् एव स्यात्" इति उक्तवान् रूपधरः ।

अनन्तरदिने प्रातःकाले एव सम्मोहिनी



रूपधराय एकं परशुं, एकं लवित्रं च दत्तवती । रूपधरं समुद्रतीरं प्रति आनीतवती । तत्र विद्यमानान् उन्नतान् विंशतिं वृक्षान् रूपधरः कर्तितवान् । लवित्रेण वृक्षाणां त्वचम् अपनीय सः उडुपं निर्मितवान् । तस्मिन् एकं सङ्केतस्तम्भं योजितवान् । सम्मोहिन्या दत्तं वस्त्रं स्तम्भे बद्धवान् । नौका पूर्णतया सिद्धा अभवत् । सिद्धां नौकां रूपधरः समुद्रजले स्थापितवान् ।

रूपधरः उडुपनिर्माणकार्यं चतुर्षु दिनेषु समापितवान् आसीत् । अग्रिमप्रयाणार्थं पाथेयं, चर्मस्यूते मधुरजलं, पानीयं च प्रपूर्य दत्तवती सम्मोहिनी । रूपधरः महता सन्तोषेण उडुपम् आरुह्य सङ्केतस्तम्भं



गृहीत्वा उपविष्टवान् ।

उडुपचालनाय अनुकूलः वायुः आसीत् । रात्रौ निद्राम् अकृत्वा नक्षत्राणां प्रकाशे रूपधरः उडुपं चालितवान् । 'समुद्रे सप्तर्षिमण्डलं भवतः वामभागे कृत्वा प्रयाणं करोतु' इति सम्मोहिनी रूपधरं सूचितवती आसीत् ।

रूपधरः सप्तदश दिनानि यावत् समुद्रे प्रयाणं कृतवान् । यदा सः समुद्रे बहुदूरं गतवान् आसीत् तदा पुनरपि झञ्झावातः आरब्धः । आकाशः मेघावृतः अभवत् । उडुपः डोलायमानः अभवत् । रूपधरः चिन्तितवान् यत् मम मरणं सन्निहितम् इति ।

''अहं दुरदृष्टवान् अस्मि । अहं यदा यदा प्रयाणार्थम् उद्युक्तः भवामि तदा सर्वदा काचित् महती विपत्तिः उपस्थिता भवति एव । ट्रायुयुद्धे ये मरणं प्राप्तवन्तः ते मदपेक्षया उत्तमाः । तेषां शवानां संस्कारः अभवत् । मम तु भाति यत् अत्रैव मम मरणं भवेत् इति । समुद्रमध्ये अहं मृतः भवामि चेत् को वा मम शवसंस्कारं कुर्यात् ? एतदपेक्षया वज्रकायेन सह मरणम् एव वरम् अभविष्यत्'' इति रूपधरः स्वस्य अवस्थां स्मरन् दुःखम् अनुभूतवान् ।

रूपधरस्य विषये देवताः कुपिताः आसन् । वायुना रूपधरस्य सङ्केतस्तम्भः पातितः अभवत् । अपरक्षणे एव उडुपः चक्राकारेण अभ्रमत् । रूपधरः उडुपात् जले अपतत् । आत्मरक्षणार्थं सः स्वशरीरस्थानि भारयुतानि वस्त्राणि निष्कास्य क्षिप्तवान् । जले तरणं कुर्वन् उडुपं पुनरपि आरुह्य उपविष्टवान् । तरङ्गाणाम् आघातेन उडुपः गोलाकारेण भ्रमणम् अकरोत् ।

तस्मिन् समये रक्षिका नाम काचित् देवता समुद्रपक्षिरूपेण नासिकया एकं वस्त्रं गृहीत्वा आगतवती । सा उडुपे उपविश्य - ''रूपधर ! प्राणभीतिः मास्तु । देवताः भवन्तं पीडयन्ति, न तु मारयन्ति । भवान् सुरक्षितं गृहं प्राप्स्यति । एषः उडुपः निरुपयोगी अस्ति । अतः एतत् वस्त्रं कटौ बद्ध्वा जले पततु । भवान् जले प्लवमानः सुरक्षितं तीरं प्राप्स्यति'' इति रूपधरं

सूचितवती ।

"भवती नूतनानि कष्टानि उत्पादयितुम् एव माम् एवं वदन्ती अस्ति । सङ्केतस्तम्भः मम उपरि पतति चेदपि उडुपं तु अहं न त्यजामि" इति रूपधरः उक्तवान् । उडुपं सुदृढं गृहीत्वा उपविष्टवान् च ।

परन्तु अल्पे एव काले उन्नतस्य पर्वतस्य आघातेन उडुपः भग्नः अभवत् । रूपधरः एकं काष्टदण्डं गृहीतवान् । तस्य उपरि अश्वारोही इव उपविष्टवान् । रक्षिकया दत्तं वस्त्रं कटौ बद्धवान् । जले पतित्वा तरणम् आरब्धवान् च ।

रूपधरः दिनद्वयं तरणं कृतवान् । तृतीयदिने प्रातः वातावरणं शान्तम् अभवत् । रूपधरः दूरतः तीरं कञ्चित् दृष्टवान् । 'इतःपरं मम कष्टानि समाप्तानि' इति चिन्तयन् सः तीरं प्रति महता उत्साहेन वेगेन च तरणं कृतवान् ।

परन्तु तीरस्य समीपे अपि मरणभीतिः अस्ति इति सः ज्ञातवान् । यतो हि तीरं शिलाभिः युक्तम् आसीत् । समुद्रस्य तरङ्गाः शिलासु घट्टनं कुर्वन्ति स्म । तेन सर्वत्र फेनः दृश्यते स्म । तरङ्गैः शिलानां घट्टनेन महान् शब्दः श्रूयते स्म । सः चिन्तितवान् यत् तरङ्गाः यदि मां शिलासु घट्टयन्ति, तर्हि मम गतिः नितरां शोचनीया स्यात् इति । सः यथा चिन्तितवान् तथैव प्रवृत्तम् । एकः शक्तिशाली तरङ्गः तं वेगेन शिलानां समीपम् अनयत् । तदा रूपधरः एकां शिलां दृढं गृहीतवान् । परन्तु सः तरङ्गः प्रतिगमनसमये रूपधरं बलात् नीतवान् । तस्मात् तस्य हस्तयोः महान् व्रणः अभवत् । तदा रूपधरः तीरं प्रति तरणं त्यक्तवान् । समुद्रे एव तरणं कुर्वन् सुरक्षितस्य स्थलस्य अन्वेषणं कृतवान् । अनतिदूरे एव नद्याः सङ्गमस्थलं सः दृष्टवान् । पुनर्जन्म प्राप्तवान् इव परमानन्दं प्राप्तवान् सः स्वस्य रक्षणाय नदीं ध्यायन् कथञ्चित् भूमिं प्राप्य किञ्चिद्दूरं गतवान् । नितरां शक्तिहीनः सः अग्रे एकम् अपि पदं स्थापयितुम् अशक्नुवन् मूर्छां प्राप्य भूमौ पतितवान् ।

- (अनुवर्तते)



# गन्तव्यं स्थानम्

कमलापुरे राजेन्द्रः नाम कश्चित् निवसति स्म । कदाचित् तेन द्वादशयोजनदूरे स्थितं सिद्धपुरं प्रति त्वरया गन्तव्यम् अभवत् । किन्तु दौर्भाग्यवशात् तस्मिन् एव दिने कर्मकरः न उपस्थितः । अतः राजेन्द्रः स्वयं शकटं चालयन् सिद्धपुरं प्रति प्रस्थितवान् ।

शकटं यावत् योजनद्वयम् अगच्छत् तावता द्वादशवर्षीयः म्लानवदनः कश्चन बालकः मार्गपार्श्वे स्थितः दृष्टः राजेन्द्रेण । सः तं बालकं पृष्टवान् – "किं वत्स ! किमर्थं भवतः मुखं म्लानम् ? कुत्र गन्तव्यं भवता ?" इति ।

"इतः द्वियोजनदूरे मम ग्रामः अस्ति । एतावत्पर्यन्तम् अहं कथञ्चित् पादाभ्याम् आगतवान् । पादवेदनाकारणतः इतोऽपि अग्रे गन्तुम् अशक्नुवन् अहं चिन्ताक्रान्तः अस्मि" इति उक्तवान् सः बालकः ।

"बालक ! अलं चिन्तया । अहं भवन्तं शकटेन नेष्यामि । शकटम् आरोहतु तावत्" इति उक्तवान् राजेन्द्रः । बालकः शकटम् आरुह्य उपविष्टवान् ।

द्वियोजनदूरं गमनानन्तरं राजेन्द्रः शकटं स्थगयित्वा पृष्टवान् – "अत्रैव अवतरणं खलु भवतः ?" इति ।

"नैव । इतोऽपि किञ्चिद्दूरं गन्तव्यम्" इति उक्तवान् बालकः । राजेन्द्रः पुनः त्रियोजनदूरं गत्वा पृष्टवान् – "एतदेव वा भवतः गन्तव्यं स्थानम् ?" इति ।

"नैव । इतोऽपि षड्योजनदूरे मम मातुलगृहम् अस्ति । तत्र मया गन्तव्यम् । यत्र मया शकटम् आरूढं ततः द्वियोजनदूरे मम गृहम् अस्ति इति तु सत्यमेव । मया असत्यं तु न उक्तम् । किन्तु मम गन्तव्यं स्थानं तु तत् न आसीत्" इति उक्तवान् बालकः ।

एतत् श्रुत्वा आश्चर्येण तस्य बालकस्य मुखं दृष्टवान् राजेन्द्रः ।





# वचनभङ्गः

'मया एतावता बहवः उपायाः आश्रिताः । तथापि एषः धूर्तः वेतालः कथमपि मां पराजितं कुर्वन् एव अस्ति । एवं तर्हि एतस्य वशीकरणार्थं कं वा उपायं कुर्याम् ?' इति चिन्तयन् दृढव्रतः त्रिविक्रमः पुनश्च वृक्षस्य समीपं गत्वा वृक्षे स्थितं शवं स्कन्धे आरोप्य श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''हे राजन् ! भवान् कस्मैचित् किञ्चन वाग्दानं कृतवान् अस्ति इति मम भाति । तस्य वाग्दानस्य पूरणार्थम् एव कष्टानि सहमानः इव दृश्यते भवान् । यदि मया ऊहितं समीचीनं स्यात् तर्हि मम प्रश्नः यत् भवान् अन्तिमक्षणं यावत् वचनभङ्गं विना स्थातुं शक्नोति वा ? इति । अत्यन्तं प्रज्ञावन्तः सन्मार्गिणः मानवाः अपि कदाचित् स्वार्थप्रेरिताः सन्तः कृतं वाग्दानं स्वयं विस्मरन्ति । कीर्तिमती इति काचित् विद्यावती महाराज्ञी चन्द्रमुखीनामिकायै

**वेतालकथा**



गन्धर्वकन्यकायै कृतं वाग्दानं कथम् उल्लङ्घितवती इति निरूपयितुम् एकां कथां वदामि । तस्य श्रवणतः भवतः मार्गायासः अपि परिहृतः भवेत् । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालः कथाम् आरब्धवान् -

पूर्वं चन्द्रदेवः चोलदेशस्य राजा आसीत् । तस्य प्रतिवेशिराज्यस्य राजकुमारी कीर्तिमती । सा चन्द्रदेवस्य मातुः दूरबन्धुः एव । यदा कीर्तिमती बालिका आसीत् तदा एव चन्द्रदेवस्य माता 'कीर्तिमतीं स्नुषात्वेन स्वीकरिष्यामि' इति कीर्तिमत्याः पित्रे वाग्दानं कृतवती आसीत् । तदारभ्य कीर्तिमती तत्रैव आसीत् । चन्द्रदेवस्य माता ताम् अत्यन्तं प्रीत्या पालयन्ती आसीत् ।

एवं बाल्यादारभ्य सहैव वर्धितवन्तौ इति कारणतः यथा यथा तौ प्रवृद्धौ तथा तथा कीर्तिमती-चन्द्रदेवयोः मध्ये स्नेहः अपि प्रवृद्धः । यदा गृहे तयोः विवाहविषये चिन्तनम् आरब्धं तदा कीर्तिमती किञ्चिदिव खिन्ना । यतः तयोः रूपे स्पष्टः भेदः आसीत् । चन्द्रदेवस्य रूपं सुन्दरं मोहकं च आसीत् । किन्तु कीर्तिमती न अपूर्वरूपवती ।

स्फुरद्रूपी चन्द्रदेवः कीर्तिमतीं परिणयति इति ज्ञात्वा कीर्तिमत्याः सख्यः 'मातुः वाग्दानस्य पूरणार्थं चन्द्रदेवः इदानीं कीर्तिमतीं परिणयेत् । किन्तु अग्रे काञ्चित् गन्धर्वकन्याम् एव परिणयेत् सः' इति रहसि परस्परं वार्तालापं कुर्वत्यः आसन् ।

तदा तदा एतादृशं सम्भाषणं कीर्तिमत्याः कर्णपथम् अपि आगच्छति स्म । एतस्मात् नितरां खिन्ना सा कदाचित् चन्द्रदेवम् उद्दिश्य - ''अहं भवतः अनुरूपा वधूः नास्मि । अतः भवान् अनुरूपां काञ्चित् सौन्दर्यवतीं परिणयतु'' इति प्रार्थितवती ।

तदा चन्द्रदेवः मन्दहासपूर्वकं - ''कीर्तिमति ! विवेकरहिताः केचन मूर्खाः आवयोः विषये असम्बद्धं प्रलपन्ति । तत् भवती श्रुतवती इति भाति । कालः एव यथायोग्यं निर्णयं करिष्यति'' इति उक्तवान् ।

चन्द्रदेवस्य एतैः निष्कल्मषवचनैः कीर्तिमत्याः सङ्कोचः अपगतः । अग्रे सा

चन्द्रदेवं परिणीय सन्तोषेण आसीत् । वर्षाणि अतीतानि । किन्तु कीर्तिमत्याः अपत्यं न अभवत् । अतः कीर्तिमती मनसि एव खेदम् अनुभवन्ती आसीत् ।

अथ कदाचित् सुन्दर्यां पूर्णिमायां रात्रौ चन्द्रदेवः कीर्तिमत्या सह नदीतीरे विहरन् आसीत् । तस्मिन् एव क्षणे आकाशमार्गेण गच्छन्ती चन्द्रमुखीनामिका काचित् गन्धर्वकन्या तौ दृष्टवती ।

चन्द्रमुखी गन्धर्वराजस्य विद्युन्मयस्य पुत्री । परमसुन्दरी इति ख्यातिं प्राप्तवती आसीत् सा । गन्धर्वेषु कोऽपि सुन्दरः नास्ति इति तस्याः मनसि असमाधानम् आसीत् । चन्द्रदेवस्य सौन्दर्येण आकृष्टा अभवत् चन्द्रमुखी । तत्क्षणे एव अदृश्यरूपेण तौ अनुसृतवती सा । सन्तानं नास्ति इति दुःखेन स्तः तौ इति अपि सा ज्ञातवती ।

तदा मौनं ततः निर्गता चन्द्रमुखी पुनः कदाचित् एकाकितया वृन्दावने विहरतः चन्द्रदेवस्य पुरतः प्रत्यक्षीभूय स्वस्य विषये विवरणं वदन्ती, 'मां वृणोतु' इति प्रार्थितवती ।

अनूह्याम् एतां घटनां दृष्ट्वा चकितः चन्द्रदेवः विनयपूर्वकं चन्द्रमुख्याः अपेक्षां निराकृतवान् । तथापि चन्द्रमुखी निरुत्साहं न प्राप्तवती ।

एकान्ते कदाचित् सा कीर्तिमत्या मिलित्वा चन्द्रदेवेन कृतं निराकरणं विवृत्य - ''चन्द्रदेवः भवत्याम् अतिशयेन अनुरागवान् अस्ति । अतः एव तस्य



अनुरूपां सौन्दर्यवतीं माम् अपि तिरस्कृतवान् अस्ति सः । मया तु स्वयं प्रार्थना कृता आसीत् । भवतीं सर्वस्वं मन्यते चन्द्रदेवः । सौन्दर्यस्य विषयः दूरे तिष्ठतु नाम । किन्तु भवत्याः अनपत्यतायाः कारणतः सः अपि महान्तम् खेदम् अनुभवन् अस्ति । किम् एतत् उचितम् ? भवती एव चिन्तयतु'' इति उक्तवती ।

चन्द्रमुख्याः वचनैः जातं खेदम् अप्रकटयन्ती कीर्तिमती - ''भवतु । अत्र भवत्याः आगमनस्य उद्देशः कः इति एतावता अपि न अवगतं मया'' इति उक्तवती ।

तदा चन्द्रमुखी - ''सर्वं विवृणोमि ।



श्रृणोतु तावत् । यदि भवती पत्युः आनन्दम् अपेक्षमाणा निःस्वार्थिनी पत्नी अस्ति, तर्हि चन्द्रदेवस्य अङ्गीकारं प्राप्य तेन सह मम विवाहं निर्वर्तयतु । वर्षाभ्यन्तरे जनिष्यमाणेन पुत्रेण सह क्रीडिष्यन् आनन्देन कालं यापयेत् सः । अपत्यप्राप्त्या भवती अपि सन्तोषं प्राप्नुयात् एव । मम परिणयात् अपि भवतीं न विस्मरिष्यति सः । प्रत्युत भवत्याः निःस्वार्थबुद्धिं ज्ञात्वा भवत्याः विषये अधिकं गौरवं प्राप्य श्लाघमानः स्थास्यति । अतः सम्यक् चिन्तयतु'' इति उक्तवती ।

कीर्तिमती बहुकालं यावत् मौनं चिन्तयन्ती आसीत् । अन्ते चन्द्रमुखीम् उद्दिश्य - ''किन्तु मम एकः नियमः अस्ति'' इति उक्तवती ।

''किं तत् ?'' इति आश्चर्येण पृष्टवती चन्द्रमुखी ।

''अद्य चैत्रकृष्णपञ्चमी । अद्य आरभ्य एकं वर्षं यावत् समयावकाशं ददातु । तावति काले अपि अहं मातृत्वं न प्राप्स्यामि चेत् चन्द्रदेवः भवतीम् एव यथा वृणुयात् तथा प्रयत्नं करिष्यामि'' इति वाग्दानं कृतवती कीर्तिमती ।

''अस्तु, तथैव भवतु'' इति उक्त्वा ततः निर्गतवती चन्द्रमुखी ।

कदाचित् देवदर्शनं कृत्वा मन्दिरतः प्रत्यागच्छन्ती आसीत् कीर्तिमती । मन्दिरस्य कस्मिंश्चित् कोणे कश्चन वृद्धः संन्यासी उपविष्टवान् आसीत् । सः कीर्तिमतीं हस्तसंज्ञया स्वसमीपम् आहूतवान् । कीर्तिमती संन्यासिनः समीपं गत्वा श्रद्धया तं नमस्कृतवती ।

संन्यासी हसन् आशीर्वादं कृत्वा - ''सन्तानः नास्ति इति निरन्तरं महत् दुःखम् अनुभवन्ती अस्ति वा अम्ब ?'' इति पृष्टवान् ।

कीर्तिमती अङ्गीकारपूर्वकं शिरः चालितवती ।

''कृपया भवत्याः हस्तं प्रदर्शयतु तावत्'' इति उक्त्वा कीर्तिमत्याः वामहस्तं परिशीलितवान् संन्यासी ।

हस्ते विद्यमानाः रेखाः परिशील्य सः खेदमिश्रितेन स्वरेण - ''भवत्याः हस्ते सन्तानप्राप्त्यर्थं रेखाः एव न सन्ति'' इति

उक्तवान् ।

पुनः क्षणं यावत् आलोच्य सः - "किन्तु सन्तानः नास्ति चेदपि उज्ज्वलभविष्यतः चिह्नानि स्फुटं दृश्यन्ते । अतः एकं कार्यं कर्तुं शक्नोति वा भवती ?" इति पृष्टवान् ।

"वदतु स्वामिन्" इति आनन्देन उक्तवती कीर्तिमती ।

"एतस्य राज्यस्य उत्तरदिशि विन्ध्यपर्वतावली अस्ति इति भवत्या ज्ञातम् एव अस्ति । पर्वतानां मध्यभागे एकं खातम् अस्ति । तेन मार्गेण अपरं तीरं प्राप्नोति चेत् वैकुण्ठेश्वरमहर्षेः आश्रमः अस्ति । भवती पत्या सह चैत्रमासस्य शुक्लपक्षस्य प्रथमायां तिथौ सूर्योदयात् पूर्वं तत्र उपस्थिता भवतु । शरदृषेः कथनानुसारम् आवाम् अत्र आगतवन्तौ स्वः इति भवती वैकुण्ठेश्वरमहर्षिं वदतु । अग्रे किं करणीयम् इति सः एव विस्तरेण भवतीं सूचयिष्यति" इति उक्तवान् ।

संन्यासिनः वचनैः पुनश्च चैतन्यं प्राप्य कीर्तिमती - "तथैव भवतु स्वामिन् । निश्चयेन तत्र गमिष्यावः" इति उक्त्वा संन्यासिनं नमस्कृत्य ततः राजगृहं प्रत्यागतवती ।

तस्मिन् दिने रात्रौ पत्युः समीपे उपविश्य सर्वमपि विस्तरेण विवृत्य - "आवयोः भाग्यस्य परीक्षणार्थम् एषः एकः एव अवसरः अवशिष्टः अस्ति । तस्मिन् संन्यासिनि मम प्रबलः विश्वासः अस्ति



अपि । अतः कृपया भवान् अपि मया सह किञ्चित् परिश्रमं यदि कुर्यात् ..." इति उक्त्वा मौनम् आश्रितवती ।

पत्न्याः उद्वेगं ज्ञात्वा चन्द्रदेवः - "भद्रे ! पतिपत्न्यौ आवां सुखेन सह दुःखं, सौख्येन सह श्रमं च विभज्य स्वीकुर्वः चेत् एव जीवनं सुखमयं भवति । अपेक्षा केवलं भवत्याः न, अपि तु आवयोः । अतः द्वौ अपि गमिष्यावः । कष्टं भवतु नाम" इति उक्तवान् ।

संन्यासिनः वचनानुसारं कीर्तिमती-चन्द्रदेवौ प्रस्थाय चैत्रमासस्य शुक्लपक्षस्य प्रथमायां तिथौ सूर्योदयात् पूर्वम् एव वैकुण्ठेश्वराश्रमं प्राप्तवन्तौ । वृद्धः करुणामयः सः ऋषिः तौ आदरपूर्वकं



चमत्कारः एव । कथम् इति विवृणोमि । इतः त्रियोजनपरिमिते दूरे अतिप्राचीनः कश्चन शिवालयः अस्ति । तत्रैव कश्चन प्राचीनः आम्रवृक्षः अपि अस्ति । सः वृक्षः वर्षे सकृत् एकं फलं ददाति । अपेक्षावान् यः कोऽपि आत्मशुद्ध्या प्रार्थयन् यदि वृक्षस्य अधः तिष्ठति तर्हि सः तत् फलं प्राप्नोति । किन्तु अपेक्षा न्यायपरा एव भवेत् । नो चेत् तत् फलं भूमौ पतति । अधः पतितं फलं खादति चेत् अपि प्रयोजनं नास्ति । तत् अञ्जलौ पतति चेत् एव अपेक्षा पूर्णा भवति । रात्रौ चन्द्रोदयसमये तत्र गत्वा स्वभाग्यस्य परीक्षां कुरुताम्'' इति विवृतवान् ।

महर्षेः वचनं श्रुत्वा कीर्तिमती त्वरया - ''अहम् अन्यत् किमपि न इच्छामि स्वामिन् । विवाहितस्त्रिया सत्या मया सन्तानापेक्षाकरणं न्यायपरं न वा ?'' इति पृष्टवती ।

महर्षिः तस्याः वचनं श्रुत्वा मन्दहासपूर्वकं - ''अम्ब, अहं किम् उत्तरं ददामि ? धर्मशास्त्रस्य विचारः अत्यन्तं सूक्ष्मः । तस्य गभीरतां देवः एव जानाति'' इति उक्तवान् ।

अनन्तरं महर्षेः वचनानुसारं कीर्तिमती-चन्द्रदेवौ प्रयाणं कृत्वा चन्द्रोदयात् पूर्वं शिवालयं प्राप्तवन्तौ । वृक्षे सुवर्णकान्त्या प्रकाशमानं फलं दृष्ट्वा कीर्तिमती श्रद्धापूर्वकं वृक्षं नमस्कृत्य वृक्षस्य अधः अञ्जलिं प्रसार्य स्थितवती । आश्चर्यं नाम चन्द्रदेवः अपि

स्वागतीकृत्य आहारपानीयादिदानेन तौ सत्कृत्य कुशलप्रश्नान् पृष्टवान् । तदा चन्द्रदेवः मन्दिरे स्थितेन संन्यासिना उक्तं सर्वं निवेद्य सन्तानापेक्षां प्रकटितवान् ।

सर्वं श्रद्धया श्रुत्वा वैकुण्ठेश्वरः - ''चन्द्रदेवमहाराज ! 'कृपया भवतः दक्षिणहस्तं दर्शयतु' इति उक्तवान् । किञ्चित्कालं हस्तं परिशील्य सः ऋषिः - ''भवतः हस्ते अपि सन्तानरेखाः न सन्ति राजन्, किन्तु शरद्दषेः कथनानुसारं चमत्कारः कोऽपि भवेत् एव'' इति उक्तवान् ।

''चमत्कारः वा ? तत् कथम् ?'' इति आश्चर्येण पृष्टवान् चन्द्रदेवः ।

तदा वैकुण्ठेश्वरमहर्षिः - ''आम्,

अञ्जलिं प्रसार्य ततः किञ्चिद्दूरे स्थितवान् आसीत् ।

चन्द्रोदयः अभवत् । वृक्षे विद्यमानं फलम् अधः अवतरत् साक्षात् चन्द्रदेवस्य अञ्जल्यां पतितम् ।

अनिरीक्षिताम् एतां घटनां दृष्ट्वा चकिता कीर्तिमती क्षणं यावत् विचिन्त्य चन्द्रदेवेन दत्तं फलस्य अर्धभागं सहर्षं स्वीकृतवती । ततः द्वाभ्याम् अपि तत् फलं खादितम् ।

तावत्पर्यन्तं मौनं स्थितवती कीर्तिमती – ''प्रभो, भवतः अपेक्षा का इति ज्ञातुं शक्नोमि वा ?'' इति पृष्टवती ।

तदा चन्द्रदेवः किञ्चिदिव गाम्भीर्येण – ''कीर्तिमति ! विद्यावती विवेकिनी च भवती मम वचनानि अवगन्तुं शक्नोति इति विश्वसिमि । एतस्य पवित्रस्य वृक्षस्य समीपे क्रियमाणा प्रार्थना न्यायपरा स्यात् इति यत् महर्षिणा उक्तं तत् स्मरति खलु भवती ? सन्तानं नास्ति इत्येषः विषयः अस्माकं जीवने लोपरूपेण स्यात् । किन्तु एषः विषयः प्रकृत्याः दृष्ट्या वैपरीत्यं वा अधर्मः वा न । प्रकृतिनियमाः न उल्लङ्घनीयाः इत्यत्र गौरवं प्रदर्शयन्तः वयं विधिलिखिते परिवर्तनम् अपेक्षामहे चेत् किं तत् उचितं भवेत् ? तादृशी अपेक्षा पूर्णा भवेत् वा ? एवं सन्देहं प्राप्तवान् अस्मि । दरिद्रः कश्चित् चौर्यं कृत्वा धनं सम्पादयति । अग्निसाक्षिपूर्वकं काञ्चित् परिणीय तां तिरस्कृत्य अन्यां परिणयति । एवं चेत् तस्य व्यवहारः धर्मविरुद्धः न भवेत् वा ? एवं



मम मनसि विविधाः सन्देहाः सन्ति । अतः एव किमपि निर्णेतुम् अशक्नुवन् अहं पवित्रवृक्षम् उद्दिश्य – 'हे धर्मदेव, अग्निसाक्षितया परिणीतवन्तौ आवां यावज्जीवम् आनन्देन जीवनं यथा कुर्याव तथा आशीर्वादं करोतु' इति प्रार्थितवान्'' इति उक्तवान् ।

पत्युः वचनं श्रुत्वा दिङ्मूढा कीर्तिमती – ''सन्तानं नास्ति चेदपि चिन्ता नास्ति । गुणवान् पतिः तु अस्ति'' इति हृष्टा । ततः प्रस्थाय अनन्तरदिने तौ राजधानीं प्रत्यागतवन्तौ ।

केषाञ्चित् दिनानाम् अनन्तरं चैत्र-कृष्णपञ्चम्यां तिथौ चन्द्रमुखी आगत्य कीर्तिमत्या मिलितवती । तदा कीर्तिमती

ताम् आदरेण स्वागतीकृत्य सत्कृतवती । अनन्तरं - "चन्द्रमुखि, वाग्दानम् उल्लङ्घयन्तीं मां क्षाम्यतु कृपया । मम पतिः एकपत्नीव्रतस्थः" इति उक्तवती । प्रवृत्तं सर्वं निवेदितवती च ।

सर्वं श्रुत्वा चन्द्रमुखी - "कीर्तिमति, भाग्यशालिनी भवती शीघ्रमेव पुत्रवती भविष्यति" इति उक्त्वा ततः निर्गतवती ।

वैचित्र्यं नाम गच्छता कालेन कीर्तिमती सुन्दरस्य शिशोः कृते जन्म दत्तवती ।

वेतालः एवं कथां समाप्य अवदत् - "राजन् ! कीर्तिमती स्ववाग्दानम् उल्लङ्घितवती इति कारणात् स्वार्थपरा जाता । तथापि सन्तानभाग्यमेव तस्याः न आसीत् । तादृशी सा पुत्रवती अभवत् । किम् एतत् विचित्रं न ? एतस्य सन्देहस्य समाधानं जानन् अपि यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः - "कीर्तिमती स्वार्थ-प्रेरिता वाग्दानं न उल्लङ्घितवती । 'मम सन्तानभाग्यं नास्ति' इति भावनायाः उत्पत्तेः पूर्वम् एव चन्द्रदेवः धर्मसूक्ष्मम् उक्त्वा तस्याः सन्देहं निवारितवान् आसीत् । तया वाग्दानम् अनुसृतं चेत् चन्द्रदेवस्य कथनानुगुणं धर्मः उल्लङ्घितः इति भवति । चन्द्रदेवस्य प्रार्थनायाम् अपि द्वन्द्वार्थः अस्ति । एकः अर्थः - 'विधिलिखितं परिवर्त्य सन्तान-दानेन एव अनुगृह्य आनन्देन जीवनं यापयितुम् अवसरं कल्पयतु' इति । अपरः अर्थः - "सन्तानभाग्यं नास्ति चेदपि आनन्देन जीवितुम् आशीर्वादं करोतु' इति । एतस्यां प्रार्थनायां विद्यमानः गूढार्थः अनुपमः एव । अतः तयोः विधिलिखितं परिवर्तितम् अभवत् । सुन्दरं शिशुं दृष्ट्वा तौ सन्तोषम् अनुभूतवन्तौ । धर्माधर्मयोः विषये सूक्ष्मज्ञानम् आसीत् इति कारणतः एव चन्द्रदेवस्य प्रार्थनातः असाध्यम् अपि सिद्धम् अभवत्" इति उक्तवान् ।

एवं वदता राज्ञा यदा मौनभङ्गः कृतः तदा शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा पुनश्च वृक्षे लम्बमानः स्थितवान् ।



# मुम्बयीपरिसरे.....

लेखः - मीरा नायर् ♦ चित्रम् - गौतमसेन्



महाराष्ट्र-गुजरातराज्ययोः सीमाप्रदेशे केन्द्रशासितप्रदेशः 'डमण्' अस्ति । एतस्य प्रदेशस्य समुद्रतीरं १२ किलोमीटर्विस्तृतम् अस्ति । अत्र धीवराणां गृहाणि आधिक्येन सन्ति । एषः तीरप्रदेशः सुन्दरैः ग्रामैः 'सर्वे'वृक्षैः च सुशोभते । प्राचीने काले 'डमण्' पोर्चुगीसुजनानाम् उपनिवेशः आसीत् । मोटीडमणप्रदेशे नानीडमणप्रदेशे च पोर्चुगीस्जनैः निर्मितानि भवनानि इदानीम् अपि द्रष्टुं शक्यानि । गुजरातीभाषीयौ मोटी-नानीशब्दौ 'बृहत्' 'लघु' इत्येतम् अर्थं द्योतयतः ।

डमण्प्रदेशस्य उत्तरे भागे गुजरातराज्यस्य सीमा परिसमाप्ता भवति । दक्षिणे भागे च महाराष्ट्रस्य सीमा अस्ति । महाराष्ट्रसमुद्रतटस्य उत्तरभागे सुसमृद्धः 'दहाणू'प्रदेशः दृश्यते । एषः प्रदेशः पूर्वम् एवं सुसमृद्धः न आसीत् । १८८० तमे वर्षे, तदनन्तरकाले च इरानीयाः केचन तत्र वासम् आरब्धवन्तः । ते तत्र फलवाटिकाः निर्मितवन्तः । फलनिमित्तम् एव इदानीम् अपि प्रसिद्धः अस्ति दहाणूप्रदेशः । अत्र 'चिक्कु'फलानि विशेषतः



वर्ध्यन्ते । देशस्य विविधान् भागान् प्रति प्रेष्यन्ते च ।

दहाणूतः अनतिदूरे दक्षिणभागे **'नालासोपारा'**ग्रामः अस्ति । पूर्वम् अत्र **'शूर्पारक'**नामकं सुप्रसिद्धं नौकास्थानम् आसीत् । शूर्पारकशब्दात् (प्राकृतं रूपं - 'सुप्पारअ' इति) हिन्दीभाषीयः सुपारीशब्दः निर्मितः अस्ति । पूर्वं मलबारप्रदेशेषु वर्ध्यमानाः पूगादयः (सुपारी) उपस्करसामग्र्यः शूर्पारकं प्रति आनीयन्ते स्म । ततः देशविदेशीयेभ्यः नानाभागेभ्यः प्रेष्यन्ते स्म । पूर्वम् अत्र मौक्तिकानि अपि प्राप्यन्ते स्म चीनादेशं प्रति प्रेष्यन्ते स्म च । नालासोपाराग्रामः इदानीं मुम्बयीनगरस्य उपनगरत्वेन परिवृत्तः अस्ति ।



*वज्रेश्वरीप्रदेशस्थम् उष्णजलकुण्डम्*

बौद्धाः भावयन्ति यत् भगवान् बुद्धः बोधिसत्त्वरूपेण एतस्मिन् ग्रामे अपि जन्म प्राप्तवान् आसीत् इति । अत्र बौद्धकालीनाः अवशेषाः स्तूपाः च इदानीम् अपि दृश्यन्ते ।

नालासोपारातः दशकिलोमीटर्दूरे वसयीप्रदेशः (बसीन इति नामान्तरम्) अस्ति । प्राचीने काले अत्र नौकानिर्माणं प्रचलति स्म । समीपस्थेभ्यः अरण्येभ्यः नौकानिमित्तं काष्ठानि सङ्गृह्यन्ते स्म । अरण्येषु योग्यानि काष्ठानि बहुधा उपलभ्यन्ते स्म एव । पोर्चुगीस्जनाः षोडशे सप्तदशे च शतके अत्र नौकानिर्माणकार्यं विशेषतः अभिवर्धितवन्तः आसन् । वसयीप्रदेशे इदानीम् उपलभ्यमानाः दुर्ग-पूजागृह-वासगृहादीनाम् अवशेषाः पोर्चुगीस्जनानां जीवनं स्मारयन्ति । जीर्णतां गतम् अत्रत्यं दुर्गं विहारकेन्द्रत्वेन परिवृत्तम् अस्ति इदानीम् ।

*मुम्बयीतः ३५ किलोमीटर्दूरे स्थितं पोर्चुगीस्जनैः निर्मितं वसयीप्रदेशस्थं दुर्गम्*



*कान्हेरीचैत्यगुहास्थः स्तूपः*





एतस्मिन् प्रदेशे तानसानदी प्रवहति । नदीपरिसरे तत्र तत्र उष्णजलकुण्डानि दृश्यन्ते । तेषां जलस्य औष्ण्यं ११०-११६ फेरनूहीट्परिमितं भवति । गन्धकयुक्तताकारणतः एषः तापः जलेषु दृश्यते । एतेषु स्नानकरणेन विविधाः रोगाः उपशान्ताः भवन्ति । वसयीस्थानकात् १० कि. मी. दूरे स्थितं **वज्रेश्वरी**कुण्डं लोकप्रसिद्धम् । ततः अनतिदूरे स्थितं **गणेशपुरी**कुण्डम् अपि प्रसिद्धम् एव । एतस्य औष्ण्यं तावत् अधिकं भवति यत् अत्रत्यजले हस्तनिक्षेपः अपि असाध्यः भवति । मुम्बयीनगरस्य उत्तरभागस्थस्य बोरिविलीप्रदेशस्य समीपे **कान्हेरी**प्रदेशे प्रसिद्धाः बौद्धगुहाः सन्ति । कृष्णगिरौ एताः सन्ति इत्यतः 'कान्हेरीगुहाः' इति एताः ख्याताः अभवन् । पश्चिमभारतेषु स्थितेषु बौद्धगुहासमूहेषु महान् गुहासमूहः एषः एव । बौद्धभिक्षवः द्वितीयशतकोत्तरं द्वादशशतकात् पूर्वम् एताः गुहाः निर्मितवन्तः इति इतिहासात् ज्ञायते । गुहासु चैत्यालयाः स्तूपाः इत्यादयः सन्ति । तेषु स्तम्भेषु सुन्दरी शिल्पकला दृष्टिगोचरीभवति । गुहाप्रदेशे पानजलकुण्डानि अपि आसन् । मलिनजलस्य शुद्धजलस्य च वहनार्थं कुल्याव्यवस्था अपि आसीत् । अत्र आहत्य १०९ गुहाः सन्ति । तासु सभा (दरबार्) गुहा चैत्यगुहा च महत्त्वपूर्णे । सभागुहायां मध्यभागे शिलामय्यौ उभे पीटिके स्तः । एवं हि तर्क्यते यत् भिक्षवः अत्र उपविश्य प्रवचनं कुर्वन्ति स्म इति । चैत्यगुहायां विशालः स्तूपः गौतमबुद्धस्य महाप्रतिमाः च सन्ति ।

कान्हेरीतः अनतिदूरे **जोगेश्वरी**गुहाः सन्ति । एतासु ७५०-८०० क्रिस्तशके निर्मितं शिवमन्दिरम् अस्ति ।

***कान्हेरीप्रदेशस्था विशाला चैत्यगुहा***

***कान्हेरीगुहाः***

*अम्बरनाथप्रदेशस्थं शिवमन्दिरम्*

मुम्बयीतः ५४ कि. मी. दूरे **अम्बरनाथ**नामके उपनगरे अन्यत् शिवमन्दिरम् अस्ति । एतत् कृष्ण-शिलाभिः निर्मितम् अस्ति । मूर्तिः भूमितलात् ५ मीटर् अधः गर्ते अस्ति । एषा स्वयम्भूमूर्तिः इति भक्तानां विश्वासः । १९४७ तमे वर्षे पाकिस्थानात् आगताः सिन्धीजनाः महत्या सङ्ख्यया अम्बरनाथप्रदेशे वसन्ति । अतः तस्मिन् शिवदेवालये पूजा इदानी महता उत्साहेन प्रचलति ।



*भाभापरमाण्वनुसन्धानकेन्द्रम्*

मुम्बय्याः दक्षिणोत्तरं प्रसृतस्य समुद्रतटस्य उत्तरभागे **ठाणेप्रदेशः**, दक्षिणभागे **ट्राम्बेप्रदेशः** च अस्ति । एतस्मिन् तीरप्रदेशे तत्र तत्र लवणस्य निर्माणं प्रचलति । पूर्वं कदाचित् अत्र मौक्तिकानि अपि लभ्यन्ते स्म । बहवः धीवराः मौक्तिक-प्राप्तीच्छया शुक्तीः सङ्गृह्णन्ति स्म । ट्राम्बेप्रदेशे भाभा-परमाण्वनुसन्धानकेन्द्रम् अस्ति इति वयं जानीमः एव, यच्च केन्द्रं परमाणुक्षेत्रे सुविख्यातम् अस्ति ।



# दुःस्वप्नः

चारुमत्याः महान् अहङ्कारः आसीत् । तस्याः श्वश्रूः यशोमती विनयशीला । किन्तु चारुमती श्वश्रूं सदा तिरस्कारेण एव पश्यति स्म । श्वश्रूविषये आत्मीयता प्रकटिता चेत् महान् अपकारः कृतः इव इति भावयति स्म सा । प्रतिपदं श्वश्र्वाः कार्ये दोषम् एव पश्यन्ती सदा तां निन्दति स्म चारुमती ।

यशोमती मन्दिरं गत्वा आगच्छति चेत् - 'स्नुषायाः मरणं भवतु इति देवं सम्प्रार्थ्य आगतवती स्यात् खलु !' इति वदति स्म ।

एतादृशेभ्यः कष्टेभ्यः विमोचनं प्राप्तुम् इच्छन्ती यशोमती कार्यादिकं शीघ्रं समाप्य गृहस्य पुरतः उपविशति चेत् - "किं भोः, मार्गे गच्छतां गणनां कुर्वती अस्ति किम् ? आकण्ठं भुक्त्वा उपविशति चेत् खादितं कथं जीर्णं भवेत् ?" इति वदति स्म ।

बुभुक्षया पीडिता यशोमती - "इतोऽपि किञ्चित् परिवेषयतु" इति वदति चेत् "इतोऽपि आवश्यकं वा ? हुँ, खादतु ! सम्यक् खादतु । पुत्रेण ज्ञातव्यं खलु - मम पत्नी मातरं पीडयति इति ?" इति वदन्ती किञ्चिन्मात्रम् अन्नं स्थालिकायां परिवेषयति स्म ।

यस्मिन् दिने श्वश्रूः किमपि अवदन्ती भोजनं करोति - "खादनं विना श्रान्ता सती भवती शय्याम् आश्रयति चेत् भवत्याः सेवां कर्तुम् अत्र दास्यः न सन्ति" इति वदन्ती पात्रे विद्यमानं सर्वम् अन्नं परिवेषयति स्म ।

स्नुषया क्रियमाणां हिंसां सहमाना यशोमती मनसि एव दुःखम् अनुभवति स्म । चारुमत्याः पतिः जयकीर्तिः बुद्धिमान् एव । किन्तु मातुः दीनावस्थां दृष्ट्वा खेदम् अनुभवन् अपि सः मौनं तिष्ठति स्म । यतः पित्रार्जिता सम्पत् कापि न आसीत्



जयकीर्तेः ! वाणिज्यकरणार्थं जामात्रे मूलधनं चारुमत्याः पित्रा एव दत्तम् आसीत् विवाहसमये ।

एतस्मात् कारणात् चारुमती तदा तदा पतिम् उद्दिश्य – "एतत्सर्वं मम पितुः कृपया जातम् । अन्यथा भवद्भ्यां कुत्रापि कर्मकरत्वेन कार्यं करणीयम् अभविष्यत् " इति तिरस्कारभावेन वदति स्म ।

एवं स्थिते कदाचित् उषसि चारुमत्या कश्चन भयङ्करः स्वप्नः दृष्टः । दुःस्वप्नात् भीता सा शयनात् उत्थाय मञ्चे उपविष्टवती । स्वप्ने सा घने मेघसमूहे भयङ्कराकारकैः चतुर्भिः पुरुषैः काष्ठदण्डे लम्बमानं किञ्चन वस्तु नीयमानं दृष्टवती । रुदती काचित् वृद्धा तान् चतुरः पुरुषान् अनुसरति स्म ।

प्रातःकाले सा पतिं स्वप्नस्य विचारं विवृत्य उक्तवती – "स्वप्नस्य कः अर्थः इति न अवगतं मया । भयङ्करस्वप्नेन रात्रौ सम्यक् निद्रा एव न प्राप्ता मया" इति ।

एतत् श्रुत्वा जयकीर्तिः क्षणं यावत् आलोच्य सर्वं ज्ञातवान् इव शिरः चालयन् – "दिवास्वप्नविषये चिन्ता करणीया नास्ति । किन्तु रात्रौ दृष्टाः स्वप्नाः भयङ्कराः भवन्ति । तत्रापि उषसि दृष्टाः स्वप्नाः निश्चयेन साकारीभवन्ति इति श्रूयते । भवती प्रातः कुक्कुटरवकरणात् पूर्वं स्वप्नं दृष्टवती, उत अनन्तरम् ?" इति पृष्टवान् ।

चारुमती तिरस्कारपूर्वकं – "भवान् ज्योतिश्शास्त्रे पदवीं प्राप्तवान् इव बोधयति किल ! भवतः पाण्डित्यम् अहं न जानामि वा ? मल्लिका-चम्पकपुष्पयोः भेदम् अवगन्तुं न शक्नोति भवान् । किं भवान् मां वञ्चयितुम् इच्छति ?" इति पृष्टवती ।

तदा जयकीर्तिः गाम्भीर्येण उक्तवान् – "विवरणं वक्तुं मम समयः नास्ति । तदर्थम् एषः उचितः कालः अपि न । भवत्याः दुःस्वप्नात् भवत्या मया च कष्टानि सम्मुखीकरणीयानि भवेयुः । अस्य ग्रामस्य उत्तरभागे प्रवहन्त्याः नद्याः पश्चिमदिशि स्थितस्य आम्रवृक्षस्य समीपे कश्चन मूकः संन्यासी भवति । सः आवर्षं कुत्रापि सञ्चरन् भवति । अस्माकं भाग्यवशात् दिनद्वयात् पूर्वम् अत्र आगतवान् अस्ति

सः । महान् पण्डितः सः स्वप्नानाम् आन्तर्यं वक्तुं समर्थः । पूर्वं कदाचित् मम स्वप्नस्य अर्थः तेन विवृतः आसीत्'' इति ।

एतत् श्रुत्वा चारुमती आश्चर्यपूर्वकं - ''किं भवता अपि दुःस्वप्नः दृष्टः आसीत् ?'' इति पृष्टवती ।

''दुःस्वप्नः न भोः । शुभस्वप्नः'' इति उक्तवान् जयकीर्तिः ।

चारुमती कुतूहलेन - ''शुभस्वप्नः वा ? कः सः ?'' इति पतिं पृष्टवती ।

तदा जयकीर्तिः उक्तवान् - ''एवं तर्हि शृणोतु । स्वप्ने काचित् सौन्दर्यवती स्त्री सुगन्धं विकिरन्ती गच्छन्ती आसीत् । अहं ताम् अनुसरन् आसम् । सा मां किञ्चन सुन्दरम् उद्यानं प्रापय्य अदृश्यतां गता'' इति ।

''सत्कार्यं कृतं तया । भाग्यशालिनी सा'' इति उक्तवती चारुमती ।

''वार्तालापमध्ये विघ्नं मा आचरतु भवती । एतस्य स्वप्नस्य विचारं यदा अहं संन्यासिनम् उक्तवान् तदा सः बहुकालं विचिन्त्य - 'भवन्तं या परिणेष्यति सा भवतः जीवनं नन्दनवनसदृशं करिष्यति । सा सुन्दरी बुद्धिमती च भविष्यति' इति सः उक्तवान् । तेन यत् उक्तं तत् अक्षरशः सत्यं जातम् अस्ति'' इति उक्तवान् जयकीर्तिः ।

''सत्यं खलु ! यत् यत् प्रवृत्तम् अस्ति तत् सत्यमेव अस्ति । वस्तुतः तु भवान् भाग्यशाली एव । तदस्तु तावत् । सः संन्यासी मूकः इति उक्तवान् खलु भवान् !



तथा चेत् एतत् सर्वं कथम् उक्तं तेन ?'' इति सन्देहपूर्वकं पृष्टवती चारुमती ।

''यत् वक्तव्यम् अस्ति तत् लघुशलाकया सिकतासु लिखित्वा प्रदर्शयति सः । अद्य सायं भवती तत्र गत्वा स्वप्नस्य विषयं वदतु'' इति उक्तवान् जयकीर्तिः ।

तद्दिने सायं चारुमती श्वश्रूम् आहूय - ''अहं गृहे न भवामि इति कारणतः अन्यत्र गत्वा कालहरणं मा करोतु । गृहरक्षणं कुर्वती द्वारे एव उपविशतु'' इति उक्त्वा आम्रवृक्षस्य समीपे स्थितस्य संन्यासिनः दर्शनार्थं प्रस्थितवती ।

तस्याः आगमनात्पूर्वं नेत्रे निमील्य उपविष्टवान् आसीत् संन्यासी । यदा चारुमती तस्य समीपं गतवती तदा सः नेत्रे



उन्मील्य स्वस्य दीर्घं श्मश्रु आमृशन् उपविष्टवान् । चारुमती भक्त्या संन्यासिनं नमस्कृत्य किञ्चिद्दूरे उपविष्टवती । 'स्वप्नानाम् आन्तर्यं वक्तुं समर्थः महात्मा भवान् एव वा ?' इति तं पृष्टवती च ।

तदा सः संन्यासी – "अहं स्वप्नस्य अर्थं वक्तुं समर्थः । किन्तु महात्मा न" इति सिकतासु लिखित्वा प्रदर्शितवान् ।

तत् पठित्वा आत्मना दृष्टं स्वप्नं विवृत्य – "महात्मन् ! एतादृशस्य भयानकस्वप्नस्य अर्थः कः स्यात् ? कृपया वदतु" इति प्रार्थितवती ।

सः संन्यासी नेत्रे निमील्य क्षणं यावत् आलोच्य नेत्रे उद्घाट्य सिकतासु लिखितवान् – 'भवत्याः स्वप्ने दृष्टस्य वस्तुनः नाम न स्मरामि । किन्तु एतत् तु निश्चितं यत् तत् वस्तु पापिनः नरकं प्रति प्रापणार्थम् उपयुज्यमानं साधनम् इति । भवती शीघ्रातिशीघ्रं नरकं गमिष्यति' इति ।

तत् पठित्वा भयेन कम्पमाना – "स्वामिन् ! कथम् एतत् ? मया दृष्टे स्वप्ने विद्यमानाः पुरुषाः यत् नयन्तः आसन् तत् मेघसमूहे । किन्तु मया श्रुतं यत् नरकं कुत्रचित् भूमेः अन्तः भवति इति" इति उक्तवती ।

तदा संन्यासी – "भवत्या दृष्टानि यमकिङ्करैः क्रियमाणां हिंसां सोढुम् अशक्तैः निःश्वसितानि बाष्पाणि, न तु मेघाः" इति सिकतासु लिखितवान् ।

तत् पठित्वा दिङ्मूढा चारुमती प्रयत्नेन आत्मानं निगूहती क्षीणस्वरेण – "स्वामिन् ! विवाहितायाः मम दश मासाः अपि न अतीताः । एतावच्छीघ्रं मया विघ्नः सम्मुखीकरणीयः आपतितः खलु ! भवतु । पृष्ठतः या वृद्धा रुदती अनुसरति स्म सा मम माता आसीत् वा ?" इति पृष्टवती ।

"न, पृष्ठतः अनुसरन्ती आगता वृद्धा भवत्याः श्वश्रूः । भवत्यां नितरां प्रीतिमती अस्ति सा । 'मम एकमात्रं प्रीतिपात्रं पुत्रम् आजीवनं सेवमाना वंशोद्धारिका स्नुषा एषा' इति चिन्तयति सा । तादृशीम् उत्तमसंस्कारयुतां श्वश्रूं तिरस्कारदृष्ट्या पश्यन्ती भवती दिने दिने स्वस्य पापानि वर्धयन्ती अस्ति । अन्ते नरकं गमिष्यति च" इति लिखित्वा प्रदर्शितवान् संन्यासी ।

तत् पठित्वा पश्चात्तापेन अश्रूणि स्त्रावयन्ती चारुमती - "स्वामिन् ! मया कृतस्य अपराधस्य प्रायश्चित्तं नास्ति वा ? एतस्मात् विमोचनं प्राप्तुं कः मार्गः आश्रयणीयः इति कृपया मार्गदर्शनं करोतु" इति प्रार्थितवती ।

तदा संन्यासी पुनः क्षणं यावत् विचिन्त्य हस्ते विद्यमानां शलाकां सञ्चालयन् सिकतासु -'अस्ति एव । एतस्मात् क्षणात् भवती मनसा श्रद्धया श्वश्र्वाः सेवां करोतु । तस्याः विषये गौरवम् आदरं च प्रदर्शयतु । तदा सा आनन्देन भवतीम् आशीर्वादेन अनुगृह्णाति । तदा भवत्याः दुःस्वप्नस्य दोषः निवारितः भविष्यति। भवती पुत्रभाग्यं प्राप्य शतं वर्षाणि यावत् जीविष्यति' इति लिखितवान् ।

अनन्तरं संन्यासी - "इदानीं गच्छतु भवती" इति विलिख्य नेत्रे निमील्य उपविष्टवान् ।

चारुमती गृहं गत्वा पादस्पर्शपूर्वकं श्वश्रूं प्रणम्य - "अहङ्कारवशात् मया एतावन्ति दिनानि यावत् भवत्यै कष्टानि दत्तानि । कृपया मां क्षाम्यतु भवती" इति प्रार्थितवती ।

अनन्तरदिने गृहस्य पृष्ठभागे स्थितस्य कूपस्य समीपे जयकीर्तिः स्नानं कुर्वन् आसीत् । तदा तत्र आगता यशोमती पुत्रम् उद्दिश्य - "पुत्र ! किम् एतत् ? अकस्मात् स्नुषायां महत् परिवर्तनं दृश्यते !" इति उक्तवती ।

तदा जयकीर्तिः हसन् - "एतत् सर्वं चारुमत्या दृष्टस्य स्वप्नस्य प्रभावः । आम्रवृक्षसमीपे स्थितस्य संन्यासिनः महिमा" इति उक्तवान् ।

"तथा वा ? तर्हि मया अपि सः द्रष्टव्यः" इति उक्तवती यशोमती ।

मातुः वचनं श्रुत्वा जयकीर्तिः - "अम्ब, तत् न शक्यते । यतः अद्य प्रातः एव सः संन्यासी तपः आचरितुं हिमालयं गतवान् अस्ति" इति उक्तवान् ।

संन्यासिनः वेषधारी अहमेव इति जयकीर्तिः कमपि कदापि न उक्तवान् एव ।





# धनस्य प्रतिप्राप्तिः

कस्मिंश्चित् ग्रामे पूर्वं श्रीरामः धर्मराजश्चेति उभौ स्नेहितौ आस्ताम् । तयोः धर्मराजः स्नेहप्रियः । श्रीरामः तावत् कृपणः । धर्मराजस्य अपत्यं न आसीत् । अतः सः कदाचित् निश्चितवान् यत् तीर्थयात्रा करणीया इति । तस्य समीपे द्विशतं सुवर्णनाणकानि आसन् । सः प्रयाणव्ययार्थं शतं सुवर्णनाणकानि रक्षन् निश्चितवान् यत् अवशिष्टानि शतं सुवर्णनाणकानि कुत्रापि सुरक्षिततया रक्षणीयानि इति । किन्तु तथा रक्षणार्थं योग्यं स्थलम् अपश्यन् सः एतद्विषये मित्रस्य अभिप्रायं पृष्टवान् ।

''भवदीयं धनं कदाचित् मद्गृहे रक्षेयम् । किन्तु तत्र चौर्यभीतिः व्ययभीतिः च अस्ति एव । अतः ग्रामात् बहिः कुत्रापि वृक्षमूले गर्ते धनं स्थापितं चेत् यात्रां समाप्य प्रत्यागत्य धनं प्रतिस्वीकर्तुं शक्यते'' इति सूचितवान् श्रीरामः ।

धर्मराजाय एषा सूचना अरोचत । 'दिने धनं यदि गर्ते स्थाप्येत तर्हि कोऽपि पश्येत्, धनम् अपहरेत् च । अतः रात्रौ गत्वा धनस्य स्थापनं वरम्' इति निश्चितवान् धर्मराजः । किन्तु रात्रौ एकाकितया गन्तुं भीतिः तस्य । अतः सः आत्मना सह श्रीरामं नीत्वा वटवृक्षमूले गर्तं कृत्वा धनं संस्थाप्य गर्तं मृत्तिकया पूरयित्वा गृहं प्रत्यागत्य शयनं कृतवान् । अनन्तरदिने पत्न्या सह तीर्थयात्रार्थं प्रस्थितवान् च ।

रात्रौ विलम्बेन गृहम् आगतं श्रीरामं विलम्बकारणं पृष्टवती तदीया पत्नी स्वर्णाम्बा । श्रीरामः वस्तुस्थितिम् उक्तवान् । तदा दुराशाग्रस्ता तस्य पत्नी उक्तवती - ''भवान् गृहं प्रति तत् धनम् आनयतु'' इति ।

श्रीरामः एतत् न अङ्गीकृतवान् । तदा

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

स्वर्णाम्बा दृढस्वरेण उक्तवती - "यदि भवान् तत् धनं न आनयेत् तर्हि अहं कूपे पतन्ती आत्महत्यां कुर्याम्" इति । अनन्यगतिकः श्रीरामः वटवृक्षसमीपं गत्वा खननेन धनपात्रं भूमितः स्वीकृत्य गृहं प्रत्यागतवान् ।



तेन धनेन आभरणानि कारयित्वा सन्तोषेण धरन्ती दिनानि यापितवती स्वर्णाम्बा ।

वर्षानन्तरं धर्मराजः काशीयात्रां समाप्य गृहं प्रत्यागत्य वटवृक्षसमीपं गत्वा धनपात्रम् अन्विष्टवान् । किन्तु तत्र धनं न आसीत् । 'किं प्रवृत्तं स्यात्' इति जानन् धर्मराजः ग्रामाधिकारिणः समीपं गत्वा प्रवृत्तं सर्वं निवेदितवान् ।

सर्वं श्रुत्वा ग्रामाधिकारी - "वञ्चकः श्रीरामः भवतः प्रश्नानन्तरम् अपि धनस्वीकरणापराधं न अङ्गीकुर्यात् । वस्तुतः तु वटवृक्षमूले धनं स्थापितम् इत्यत्र साक्ष्यम् एव नास्ति । अतः एतदर्थम् अन्यः एव उपायः चिन्तनीयः" इति उक्त्वा धर्मराजम् एकम् उपायं बोधितवान् । ग्रामाधिकारिणः गृहात् धर्मराजः श्रीरामस्य गृहं गतवान् ।

धर्मराजस्य दर्शनात् श्रीरामस्य मनसि भीतिः उत्पन्ना । किन्तु धर्मराजस्य मुखस्य दर्शनात् सः ऊहितवान् यत् धनस्य चौर्यम् इतोऽपि एतेन न ज्ञातम् इति । अतः सः धैर्येण - "मित्र ! यात्रा कथम् आसीत् ?" इति पृष्टवान् ।

"सर्वं सुष्ठु आसीत् । प्रस्थानमुहूर्तस्य कारणात् वा इति न जाने, मया यात्रासन्दर्भे शतं सुवर्णनाणकानि सम्पादितानि । मया चिन्त्यते यत् पूर्वं यत्र धनं स्थापितं तत्रैव एतत् धनम् अपि स्थापनीयम् इति । धनं स्थापयित्वा रामेश्वरयात्रा करणीया इति मम सङ्कल्पः । श्वः रात्रौ अहं भवतः गृहम् आगमिष्यामि । उभौ अपि मिलित्वा वटवृक्षसमीपं गत्वा धनं संस्थापयाम" इति उक्तवान् धर्मराजः ।

वटवृक्षसमीपं पुनर्गमनस्य विचारः श्रीरामे भीतिम् अजनयत् । तथापि सः ताम् अप्रदर्शयन् - "अस्तु" इति स्वस्य अङ्गीकारं प्रदर्शितवान् ।

धर्मराजस्य प्रतिगमनस्य अनन्तरं

श्रीरामः पत्नीम् उद्दिश्य - ''भोः, महती विपत् उपस्थिता'' इति उक्त्वा प्रवृत्तं सर्वं निवेद्य - ''श्वः अहं धर्मराजेन सह गच्छामि चेत् मया कृतं चौर्यं तेन ज्ञातं भविष्यति खलु !'' इति उक्तवान् ।

''अये, सुवर्णावकाशे प्राप्ते, खेदम् अनुभवति खलु भवान् ? मदीयानि आभरणानि सर्वाणि विक्रीय शतं सुवर्णनाणकानि सङ्गृह्य वटवृक्षमूले अद्यैव निक्षिप्य आगच्छतु । तत् धनं दृष्ट्वा धर्मपालः पुनरपि निश्शङ्कं शतं सुवर्णनाणकानि तत्र स्थापयिष्यति । सः यदा रामेश्वरं गमिष्यति तदा वयं वृक्षमूलस्थं समग्रं धनम् आनेष्यामः'' इति उक्तवती स्वर्णाम्बा ।

श्रीरामः पत्न्याः वचनम् अङ्गीकृत्य आभरणानि गृहीत्वा नगरं गत्वा तानि आधिरूपेण निक्षिप्य धनम् आनीतवान् । वटवृक्षमूले स्थापितवान् च ।

अनन्तरदिने रात्रौ तेन दीर्घकालं धर्मराजस्य प्रतीक्षा कृता । मध्यरात्रः अतीतः चेदपि धर्मराजः न आगतः । अतः श्रीरामः एव धर्मराजस्य गृहं गत्वा द्वारशब्दं कृतवान् । तदा धर्मराजः निद्रातः जागरणं प्राप्य उत्थाय आगत्य - ''किं श्रीरामवर्य ! मध्यरात्रे किमर्थम् अत्र आगमनं भवतः ?'' इति पृष्टवान् ।

तदा श्रीरामः पृष्टवान् -''रात्रौ वटवृक्षसमीपं गच्छाम इति उक्तम् आसीत् खलु भवता ?'' इति ।

''आम् । किन्तु मया निर्णयपरिवर्तनं कृतम् । मया रामेश्वरयात्रा अग्रे कदाचित् क्रियते, न इदानीम् । अतः मया एकाकिना एव वटवृक्षसमीपं गत्वा धनम् आनीतम्'' इति उक्तवान् धर्मराजः ।

प्रतिवचनं किमपि अवदन् श्रीरामः गृहं प्रत्यागत्य पत्नीं प्रवृत्तं समग्रं निवेदितवान् । तदा स्वर्णाम्बा - ''हा हन्त ! वयं वञ्चिताः अभवाम । मम आभरणानि हस्तच्युतानि अभवन् । आधिरूपेण स्थापितानि तानि आनेतुं कुतः मया धनम् आनेतव्यम् !'' इत्येवं वदन्ती विलपनं कृतवती ।





# महाभारतम्

अग्निहोत्रः आत्मना अनुभूतां दुरवस्थां समग्रां ब्रह्माणं निवेदितवान् । अग्निहोत्रेण अनुभूतं कष्टं सर्वं शान्ततया श्रुत्वा ब्रह्मा अन्ते उक्तवान् - ''भवतः विषये यद्यपि मम अनुकम्पः अस्ति, तथापि अहं प्रकृतं भवतः साहाय्यं किमपि कर्तुं न शक्नोमि । किन्तु एतावता भवता निराशा प्राप्तव्या नास्ति । यतः नरनारायणौ कृष्णार्जुनरूपेण अग्रे भूमौ अवतरिष्यतः। तदा तौ खाण्डवदहनं कर्तुम् आगमिष्यतः । भवान् तस्मिन् समये तत्र गत्वा तयोः साहाय्यं प्रार्थयतु । यदि तौ अङ्गीकरिष्यतः तर्हि भवतः कार्ये कोऽपि विघ्नः न भविष्यति'' इति ।

ब्रह्मणः वचनस्य अनुगुणम् अग्निहोत्रः कृष्णार्जुनयोः साहाय्यं प्राप्तुम् आगतवान् आसीत् ।

अग्निहोत्रस्य वचनं श्रुत्वा अर्जुनः उक्तवान् - ''पश्यतु अग्निहोत्र, आवाभ्यां भवतः साहाय्यं करणीयं चेत् इन्द्रादिदेवताः निग्रहणीयाः । तदा अस्त्रादीनाम् आवश्यकता भवति एव खलु ! किन्तु इदानीं मम समीपे, कृष्णस्य समीपे वा धनुः, अस्त्राणि, रथाः वा न सन्ति । अतः यदि भवान् मह्यम् उत्तमं धनुः, उत्तमं रथं, श्रीकृष्णाय आवश्यकानि आयुधानि च सज्जीकरोति तर्हि आवां भवतः इष्टं पूरयिष्यावः'' इति ।

एतत् श्रुत्वा अग्निहोत्रः वरुणं स्मृतवान् । वरुणः तत्क्षणे एव तत्र प्रत्यक्षः जातः । तं प्रार्थितवान् अग्निहोत्रः - ''वरुणदेव, चन्द्रेण दत्तं गाण्डीवनामकं धनुः, अक्षयतूणीरं, कपिध्वजयुक्तं रथं, चक्रायुधं च भवतः समीपे सन्ति खलु ।

''खाण्डववनदहनम्''



तानि इदानीं मह्यम् आवश्यकानि । अतः तानि ददातु कृपया'' इति ।

अग्निहोत्रेण प्रार्थितं सर्वं दत्त्वा वरुणः ततः निर्गतवान् । अग्निहोत्रः तानि सर्वाणि अपि कृष्णार्जुनयोः कृते दत्तवान् । चक्रं कृष्णः स्वीकृतवान् । गाण्डीवम् अक्षयतूणीरं च अर्जुनः स्वीकृतवान् । एतानि आयुधानि न सामान्यानि । गाण्डीवधनुः लक्षायुधशक्तिम् अपि अतिशेते स्म । कपिध्वजयुक्तं रथम् अक्षयतूणीरं च पूर्वं विश्वकर्मा निर्मितवान् आसीत् । तयोः उपयोगः देवासुरयोः युद्धसमये स्वीकृतः आसीत् । कृष्णेन स्वीकृतं चक्रायुधं शत्रून् संहृत्य पुनः स्वस्वामिसमीपं स्वयम् एव आगच्छति स्म ।

वरुणः अन्तर्धानात् पूर्वं कृष्णाय कामोदकीनामिकां गदाम् अपि दत्तवान् आसीत् ।

सन्तुष्टौ कृष्णार्जुनौ आयुधानि स्वीकृत्य अग्निहोत्रम् उक्तवन्तौ - ''अग्निहोत्र, भवान् खाण्डववनस्य दहनस्य आरम्भं करोतु । इतःपरम् इन्द्रः अपि भवतः कार्ये विघ्नं कर्तुं न शक्ष्यति'' इति ।

अतीव सन्तुष्टः अग्निहोत्रः महता उत्साहेन खाण्डववनं प्रविष्टवान्, दहनम् आरब्धवान् च । वने विद्यमानानां महावृक्षाणाम्, ओषधीनां, वनस्पतीनां, च दहनं तेन कृतम् ।

दावानलस्य तापम् असहमानाः अनन्यगतिकाः प्राणिनः वनात् बहिः आगन्तुम् उद्युक्ताः । तदा कृष्णार्जुनौ तान् तत्रैव अवरुध्य अग्नये आहुतीकृतवन्तौ । उड्डीय गन्तुं समर्थाः पक्षिणः अपि तापवशात् पुनः अग्नौ पतित्वा मृताः ।

प्रलयकालीनः अग्निः इव अग्निहोत्रः खाण्डववनं समग्रं दग्धवान् । एतत् दृष्ट्वा भीताः देवाः इन्द्रस्य समीपं गत्वा - ''प्रभो ! समग्रं विश्वम् एव भस्मीभवत् अस्ति । कृपया अस्मान् रक्षतु'' इति निवेदितवन्तः ।

तदा इन्द्रः खाण्डववनस्य उपरि महता प्रमाणेन वृष्टिं कर्तुं मेघान् आदिष्टवान् । एतदनुगुणं मेघाः वर्षणं कृतवन्तः । महता प्रमाणेन वृष्टिः पतिता चेत् अपि अग्नेः औष्ण्यस्य कारणात् सा बाष्पमयताम्

आप्नोत् । अग्निं निग्रहीतुम् अशक्तः इन्द्रः नितरां क्रुद्धः सन् - ''इतोऽपि भयङ्कररूपेण वृष्टिं कुर्वन्तु'' इति मेघान् आदिष्टवान् ।

किन्तु अर्जुनः महान् पराक्रमशाली । सः स्वस्य पराक्रमेण, वृष्टेः एकः बिन्दुः अपि यथा न पतेत् तथा खाण्डववनस्य उपरि बाणानां वितानम् एव निर्मितवान् । अतः खाण्डववनस्य दाहे अग्निना अल्पः अपि क्लेशः न अनुभूतः । कृष्णार्जुनयोः साहाय्येन समग्रं खाण्डववनम् अग्निहोत्रः दहति इति यदा खाण्डववनस्य रक्षकः सर्पराजः तक्षकः ज्ञातवान् तदा सः तत् वनं त्यक्त्वा कुरुक्षेत्रं गतवान् ।

तक्षकस्य पुत्रः अश्वसेनः मात्रा सह रहसि गच्छन् आसीत् । अर्जुनः तौ दृष्ट्वा अश्वसेनस्य मातुः शिरः, तस्य पुच्छं च कर्तितवान् । मरणात् रक्षितः अश्वसेनः अर्जुनस्य भयात् विमोचितः अभवत् ।

अनन्तरम् अर्जुनः इन्द्रः च घोरं युद्धं कृतवन्तौ । इन्द्रः अर्जुनं जेतुं न शक्तवान् । खाण्डववने विद्यमानाः केचन राक्षसाः अपि युद्धार्थम् आगताः । तान् कृष्णः स्वस्य चक्रेण मारितवान् । मयनामकः राक्षसः कृष्णस्य दृष्टिपथात् आत्मानं रक्षन् ततः पलायनं कर्तुम् उद्युक्तः । एतत् दृष्ट्वा कृष्णः तं मारयितुं प्रवृत्तः । तदा मयः अर्जुनस्य समीपम् आगत्य - ''मां रक्षतु'' इति दैन्येन प्रार्थितवान् । शरणागताय तस्मै अर्जुनः अभयं दत्तवान् । अतः मयः कृष्णात् रक्षितः अभवत् ।



एवं पञ्चदश दिनानि यावत् अग्निः खाण्डववनं दग्धवान् । सर्वे जीवराशयः वनेन सह दग्धाः अभवन् । किन्तु तक्षकः, तस्य पुत्रः अश्वसेनः, मयः, चत्वारः शार्ङ्गिकाः च आत्मानं रक्षितुं शक्तवन्तः ।

एते शार्ङ्गिकाः मन्दपालनामकस्य मुनेः पुत्राः आसन् । मन्दपालः अखण्ड-ब्रह्मचर्यव्रतं पालयन् तपः कृत्वा स्वस्य योगशक्त्या स्वर्गं गतवान् आसीत् । किन्तु सः स्वर्गे अपि सुखं न प्राप्तवान् आसीत् । एतस्य कारणम् अजानन् सः तत्रत्यान् देवान् - ''मम सुखस्य अप्राप्तेः किं कारणम् ?'' इति पृष्टवान् आसीत् ।

तदा देवाः उक्तवन्तः आसन् - ''भवान् तपः कृत्वा देवऋणं समापितवान् । किन्तु

पितृऋणं तु न पूरितवान् । अतः एव भवता स्वर्गे अपि सुखं न प्राप्तम्'' इति ।

मन्दपालः लोके विद्यमानं कञ्चन नियमं जानाति स्म यत् पक्षिरूपेण जन्म प्राप्तं चेत् शीघ्रं सन्तानः प्राप्यते इति । अतः सः शार्ङ्गिकपक्षिणः रूपं धृत्वा जरिता-नामिकायाः पक्षिण्याः सम्पर्कतः चतुरः पुत्रान् प्राप्तवान् आसीत् ।

तदनन्तरं सः स्वकीयम् आश्रमं गत्वा स्वस्य पत्न्या लपितया सह वासम् आरब्धवान् आसीत् । अथ कदाचित् सः खाण्डववनं दग्धुं गच्छन्तम् अग्निहोत्रं दृष्टवान् । स्वयोगशक्त्या अग्निहोत्रस्य उद्देशं ज्ञात्वा सः तम् उक्तवान् - ''अग्निहोत्र, मम चत्वारः पुत्राः खाण्डववने सन्ति । तान् मा मारयतु कृपया'' इति ।

अग्निहोत्रः मन्दपालस्य निवेदनम् अङ्गीकृतवान् आसीत् । अतः ते चत्वारः अपि अपायात् रक्षिताः जाताः आसन् ।

अग्निहोत्रः खाण्डववनं समग्रं दग्धवान् आसीत् । एतेन तस्य अजीर्णरोगस्य निवारणम् अभवत् । स्वस्य साहाय्यं कृतवन्तौ कृष्णम् अर्जुनं च आशिषा अनुगृह्य सः ततः निर्गतवान् ।

कृष्णार्जुनयोः शौर्यं दृष्ट्वा सन्तुष्टः इन्द्रः देवैः सह प्रत्यक्षः जातः । सः अर्जुनम् उद्दिश्य उक्तवान् - ''अर्जुन ! अहं सन्तुष्टः अस्मि । भवान् यत् इच्छति तत् ददामि'' इति उक्तवान् ।

अर्जुनः - ''दिव्यास्त्रं ददातु'' इति



प्रार्थितवान् ।

''अग्रे कदाचित् महेश्वरः प्रत्यक्षः भविष्यति । तदा सः भवते दिव्यास्त्रं दास्यति'' इति इन्द्रः उक्तवान् । 'भवतोः परस्परानुरागः एवम् एव अनुवर्तताम्' इति उक्त्वा इन्द्रः देवैः सह स्वर्गं प्रति गतवान् ।

अनन्तरं कृष्णार्जुनौ यमुनानद्याः तीरे विद्यमानं स्वविहारस्थलं गतवन्तौ । तौ अनुसरन् मयः अपि आगतवान् । सः अर्जुनं नमस्कुर्वन् - ''महात्मन्, यदि भवतः दया न अभविष्यत् तर्हि अहम् अस्मिन् खाण्डववनदहनसमये अग्निहोत्रतः कृष्णतः वा मरणं प्राप्तवान् स्याम् । अतः कृतज्ञता कथम् अर्पणीया इति न ज्ञायते । अहं राक्षसानां विश्वकर्मा अस्मि । अतः भवान्



यत् इच्छति तस्य निर्माणं कृत्वा अहम् इतः गमिष्यामि'' इति उक्तवान् । अर्जुनः कामपि अपेक्षां न प्रकटितवान् । सः मयम् उद्दिश्य - ''भवतः स्नेहः सहकारः च अस्ति चेत् तावता एव अहं तृप्तः'' इति उक्तवान् । किन्तु मयः सानुरोधम् उक्तवान् - ''भवत्कृते किमपि निर्माय एव गन्तव्यम् इति मम अपेक्षा । अतः मया किं निर्मातव्यम् इति आदिशतु'' इति ।

अर्जुनः एतद्विषये कृष्णस्य अभिप्रायं पृष्टवान् । तदा कृष्णः किञ्चित् आलोच्य - ''एवं तर्हि भवान् धर्मराजाय एकं सभागृहं निर्माय ददातु । तत् असदृशम्, उत्तमं, दिव्यं च भवेत्'' इति मयम् उद्दिश्य उक्तवान् ।

कृष्णेन उक्तं मयः अङ्गीकृतवान् । ततः कृष्णार्जुनौ मयेन सह इन्द्रप्रस्थं प्रति आगतवन्तौ । धर्मराजसमीपं गत्वा खाण्डववनदहनस्य विचारं, अग्नितः अर्जुनेन कृतं मयस्य रक्षणं, प्रत्युपकारार्थम् मयेन कृतां सभागृहनिर्माणप्रतिज्ञां च निवेदितवन्तौ च । एतत्सर्वं श्रुत्वा धर्मराजः सन्तोषं प्रकटितवान् ।

ततः शुभे दिने प्रातःकाले मयः मङ्गलस्नानं कृत्वा दीनदुर्गतिभ्यः यथोचितं वस्त्रधनादिकं दत्त्वा कस्मिंश्चित् समतलप्रदेशे भव्यं सभागृहं निर्मातुम् उद्युक्तः अभवत् । तस्मिन् समये कृष्णः द्वारकां प्रति प्रस्थितवान् । अर्जुनः द्वारकातः येन रथेन आगतवान् आसीत् तेन रथेन एव कृष्णः प्रस्थितवान् । पाण्डवाः बहुदूरपर्यन्तं कृष्णं सम्प्रेष्य आगतवन्तः ।

मासाभ्यन्तरे एव मयः सभागृह-निर्माणकार्यं समापितवान् । पूर्वं सः वृषपर्वनामकाय कस्मैचित् राक्षसमहाराजाय एकं दिव्यं सभाभवनं निर्माय दातव्यमिति उद्देशेन बिन्दुसरोवरस्य तटे विविधान् मणीन् निगूह्य स्थापितवान् आसीत् । तेषु वरुणसम्बद्धः देवदत्तनामकः अपूर्वः शङ्खः अपि अन्यतमः आसीत् । मयः गदां भीमाय, शङ्खम् अर्जुनाय च दत्तवान् ।

मयेन निर्मितं सभागृहम् अत्यपूर्वम् आसीत् । तत्र केषाञ्चन सरोवराणां निर्माणं कृतवान् आसीत् मयः । भवनस्य भित्तीः रत्नैः, स्तम्भान् वैढूर्यैः, सोपानानि स्फटिकैः च अलङ्कृतवान् आसीत् मयः । सुवर्णेन

निर्मिताः मीनाः कमलानि च तत्र तत्र योजितानि आसन् । जलस्थलयोः अभिज्ञाने भ्रमः यथा स्यात् तथा विशेषव्यवस्थां कृतवान् आसीत् मयः ।

अत्याकर्षकम् अतिरमणीयं सभागृहं दृष्ट्वा प्रजाः सर्वाः सन्तुष्टाः । धर्मराजः नितरां सन्तुष्टः सन् मयं यथोचितं सत्कृत्य प्रेषितवान् । दशसहस्रं ब्राह्मणान् आमन्त्र्य दानादिकं कृत्वा ब्राह्मणानाम् आशीर्वादं प्राप्य सभागृहं प्रविष्टवान् सः ।

बहुभ्यः देशेभ्यः आगताः महाराजाः धर्मराजस्य सामन्तराजत्वम् अङ्गीकृत्य धर्मराजाय अश्वान्, सुन्दरमहिलाः, सुवर्णाभरणानि, दासदासीः, बहुविधानि उपायनानि च अर्पितवन्तः । एवम् उपायनम् अर्पितवत्सु अङ्गः, वङ्गः, कलिङ्गः, आन्ध्रः, पुण्ड्रकः, किरातः, मगधः, मत्स्यः, मालवः, केकयः, करुशः, काम्भोजः, मद्रः, पाण्डवः इत्यादीनां देशानां राजानः अन्यतमाः आसन् । अस्मिन् सन्दर्भे एव बहवः ऋषयः धर्मराजस्य समीपम् आगत्य बहुविधकथाः उक्तवन्तः । तस्मिन् समये नारदः पारिजात-रैवतादिशिष्यैः सह धर्मराजस्य सभाम् आगतवान् । धर्मराजः श्रद्धया भक्त्या च अर्घ्यं, पाद्यम्, आसनं, मधुपर्कं च दत्त्वा तं नमस्कृतवान् ।

अनन्तरं नारदमुनिः महाराजेन कानि कानि कार्याणि करणीयानि इति विस्तरेण उक्तवान् । दिक्पालकानां सभाः अपि वर्णितवान् । राजसूययागस्य माहात्म्यं वर्णयित्वा - ''हरिश्चन्द्रादयः महाराजाः राजसूययागस्य कारणतः एव इदानीं स्वर्गे सन्ति । अतः भवान् अपि एतं राजसूययागं कृत्वा स्वर्गं प्राप्तुं शक्नोति'' इति उक्तवान् । ततः सः धर्मराजम् उद्दिश्य - ''यदि राजसूययागः निर्विघ्नरूपेण समापनीयः तर्हि युद्धम् अपि अङ्गीकरणीयं भविष्यति । युद्धात् बहूनां जनानां मरणं भविष्यति । अतः यागस्य आरम्भात् पूर्वं पूर्वापरं लाभालाभं च यथोचितं निर्णयतु'' इति उक्त्वा धर्मराजस्य अनुज्ञां प्राप्य द्वारकां प्रति प्रस्थितवान् ।



# र स वा र्ताः

## नववर्षागमने विलम्बः जातः

नववर्षस्य आगमनम् एककलात्मक-विलम्बेन जातम् । १९९६ तमं वर्षं 'लीप्'वर्षम् इत्यतः फेब्रवरीमासे एकं दिनम् आधिक्येन यथा योज्यते तथैव अटामिक्घट्यां डिसेम्बर्मासस्य ३१ तमे दिनाङ्के एका कला संयोज्यते । अतः एव नववर्षस्य प्राप्तौ कलात्मकः विलम्बः जातः। भूभ्रमणम् आधारीकृत्य अटामिक्घट्यां समयः व्यवस्थाप्यते । भूमौ २/३ भागः जलमयः अस्ति इत्यतः समुद्राणां भारः भूभ्रमणे अल्पं परिणामं जनयति । अतः एव अटामिक्-घटीव्यवस्थापकाः तदा तदा एवं कलात्मकस्य कालस्य संयोजनं कुर्वन्ति ।

## मीने काचकमयं नेत्रम्

अमेरिकादेशस्य दक्षिणकरोलिनाप्रदेशे स्थितः मीनसङ्ग्रहालयस्य कस्यचित् मीनस्य नेत्रस्य स्थाने शस्त्रचिकित्सया सुवर्णवर्णीयं काचकनेत्रं संयोजितम् अस्ति । एषा शस्त्रचिकित्सा जलात् बहिः प्रवृत्ता । पशुवैद्यकीयविद्यालये प्रवृत्तायाः एतस्याः शस्त्रचिकित्सायाः निमित्तं वैद्येन बिम्बाकारवर्धकः दर्पणः आतलघून उपकरणानि च उपयुक्तानि आसन् । शस्त्रचिकित्सालये मीनः विसंज्ञः कृतः आसीत् ।

## 'पाण्डा'सङ्घः

'पाण्डा'प्राणिना सह क्रीडतः जवहरलाल-वर्यस्य चित्रं तावत् सुप्रसिद्धम् । नेहरुवर्यस्य गृहे तीनूमूर्तिभवने (देहलीस्थे) एते पाण्डाप्राणिनः वर्धिताः सन्ति । विशालनेत्रयुक्तस्य श्वेतकृष्णरोमयुक्तस्य एतस्य पाण्डाप्राणिनः मूलं तावत् चीना टिबेट् च । नेहरुवर्यस्य जन्मदिनस्य (नवेम्बर् - १४) सन्दर्भे 'भारतीयपाण्डा-सङ्घः' (पाण्डा क्लब् आफ् इण्डिया) नाम अन्ताराष्ट्रियसंस्था संस्थापिता अस्ति । ऊनषोडशवर्षीयाः बालकाः एतस्य सङ्घस्य सदस्यतां प्राप्तुम् अर्हन्ति । एतस्य सङ्घस्य मद्रास्शाखायां १०० सदस्याः सन्ति । नवेम्बर्मासस्य १४ दिनाङ्के प्रवृत्ते प्रारम्भोत्सवे सर्वे पाण्डाप्राणिनः हस्तं स्पृशन्तः सन्तोषं प्राप्तवन्तः । एतस्य स्थापकः टेन्निस्पटुः विजय-अमृतराजवर्यः सदस्यानां शुभं सन्दिश्य संस्थायाः भावियोजनाः विवृतवान् । यदि भवन्तः अपि एतस्याः संस्थायाः सदस्यत्वम् इच्छन्ति तर्हि अधस्तनसङ्केताय पत्रं लिखन्तु -

पाण्डा क्लब् आफ् इण्डिया, २, कृष्णमाचारी रोड्, नुंगम्बाकम्,
मद्रास् - ६०००३४



# सालवृक्षः

मध्यमपाण्डवः अर्जुनः पिता इन्द्रः इव गौराङ्गसुन्दरः आसीत् । अतः एव अर्जुनः इति नाम्ना सः ख्यातः आसीत् इति काचित् कथा श्रूयते । सालवृक्षस्य काष्ठं श्वेतवर्णीयं भवति इति कारणतः केषुचित् प्रदेशेषु एतं वृक्षम् अपि 'अर्जुनवृक्षः' इति निर्दिशन्ति । एषः वृक्षः तमिलुभाषया 'वेळ्ळमरुदु' इति, तेलुगुभाषया 'मद्दिचेट्टु' इति, मलयालभाषया 'स्वर्णक्कम्' इति, आस्सामीभाषया 'सोनारु' इति, बङ्गालीभाषया 'सोण्डाल् बण्डार्लेट्' इति च उच्यते ।

आस्सांराज्ये, बङ्गालराज्ये, केरलराज्ये दक्षिणकर्णाटकराज्ये च एते वृक्षाः बाहुल्येन दृश्यन्ते । सामान्यतः एते वृक्षाः नदीतीरे शीतलपरिसरे सम्यक् वर्धन्ते । केषुचित् संस्कृतग्रन्थेषु 'नदीसर्जाः' इत्येव उल्लेखः कृतः दृश्यते । ल्याटिन्भाषया एतं वृक्षं 'टेर्मिनालिया अर्जुना' इति अभिजानन्ति । एतस्य वृक्षस्य पुष्पाणि मन्दहरितानि भवन्ति । वृक्षशाखानाम् अग्रभागे पुष्पाणि भवन्ति ।

मार्च-जून्मासयोः एते वृक्षाः पल्लविताः भवन्ति । कान्तियुतानि हरितानि एतद्वृक्षीयाणि पर्णानि परस्परम् अभिमुखानि भवन्ति । शीतकाले यदा पर्णानि गलन्ति तदा ताम्रवर्णताम् आप्नुवन्ति । तेषु दिनेषु एते वृक्षाः नयनमनोहराः दृश्यन्ते । एतेषां वृक्षाणां वैशिष्ट्यम् एतत् अस्ति यत् एते वृक्षाः कदापि पर्णरहिताः तु न भवन्ति ।

एतस्य काष्ठानि अल्पभारयुतानि चेदपि दृढानि भवन्ति । द्वाराणां, वातायनानां, कृष्युपकरणानां च निर्माणे एतानि काष्ठानि उपयुज्यन्ते ।



# जनकः

कस्यचित् राज्यस्य राजा सन् तपसः माहात्म्यम् अवगत्य, राजसिंहासनं परित्यज्य तपः आचर्य राजर्षिः अभवत् विश्वामित्रः । सः अरिषड्वर्गान् जित्वा 'ब्रह्मर्षिः' इति प्रख्यातः । किन्तु मिथिलाधिपतिः जनकः राजा सन् ज्ञानवैराग्यं प्राप्य गृहस्थाश्रमे स्थित्वा एव अध्यात्मिकविषयेषु आसक्तिं दर्शितवान् । जनकस्य आध्यात्मिकसाधनायै राज्याधिकारस्य अवरोधः कदापि न अभवत् । 'राजा अस्मि' इति भावः अपि तस्य मनसि न आसीत् । राज्यनिर्वहणस्य दायित्वं दैवार्पितभावेन यज्ञबुद्ध्या निरूढवान् सः । अतः एव सः 'कर्मयोगी' इति 'राजर्षिः' इति च नाम्ना ख्यातिं प्राप्तवान् ।

वाल्मीकिरामायणे राजर्षिजनकस्य उदात्तं पात्रं चित्रितम् अस्ति । सः यज्ञकरणार्थं भूमेः कर्षणं कुर्वन् आसीत् । तदा हलस्य स्पर्शात् काचित् सुवर्णपेटिका घट्टिता अभवत् । तस्यां पेटिकायां दिव्यतेजसा प्रकाशमानः शिशुः प्राप्तः । तस्य शिशोः 'सीता' इति नामकरणं कृत्वा प्रीत्या तां पालितवान् जनकः । यदा सा प्राप्तवयस्का अभवत्, तदा शिवधनुषः भञ्जनं कृतवते श्रीरामाय दत्त्वा विवाहं कारितवान् इति या कथा श्रूयते तां सर्वे जानन्ति एव ।

जनकः तदा तदा विद्वद्गोष्ठीं समावेश्य धर्मवेदान्तादीनां विषये चर्चां करोति स्म । कुलगुरुणा याज्ञवल्क्येन सह जनकेन कृतं सम्भाषणं तात्त्विकलोके अत्यन्तं प्रसिद्धम् अस्ति । तत्रत्यान् कांश्चन अंशान् अत्र परिशीलयाम ।

जनकः -'महात्मन् ! मनुष्यं प्रवर्तयन् प्रकाशः कः ?'
याज्ञवल्क्यः - 'महाराज, सूर्यः ।'
ज - 'यदा सूर्यास्तः भवति, तदा ..?'
या - 'चन्द्रः प्रकाशं ददाति ।'
ज - 'सूर्यचन्द्रयोः अनुपस्थितौ ?'
या - 'अग्निः प्रकाशं ददाति ।'
ज - 'अग्नेः अनुपस्थितौ ?'
या - 'तादृशसन्दर्भे सम्भाषणं मार्गदर्शनं करोति ।'
ज - 'तदपि नास्ति चेत् कथम् ?'
या - 'तादृशसन्दर्भे आत्मा एव प्रकाशं ददाति ।'



# भवन्तः जानन्ति वा ?

१. गतेभ्यः द्वादशवर्षेभ्यः 'अण्वस्त्ररहितम्' इति निर्दिष्टं राष्ट्रं किम् ?
२. भारतस्य काङ्ग्रेस्पक्षेण कदा शतमानोत्सवः आचरितः ?
३. ग्रहेषु अत्यन्तं सुविशालः ग्रहः कः ?
४. देहल्यां स्थितस्य वैस्रायनिवासस्य (इदानीन्तन-राष्ट्रपतिभवनस्य) विन्यासविषये केन कल्पना कृता आसीत् ?
५. देवलोकाधिपस्य इन्द्रस्य राजधानी का ?,
६. धूमशकटप्रकोष्ठनिर्माणयन्त्रागारम् ( 'इण्ट्रिग्रल् कोच्'निर्माणसंस्था ) कुत्र अस्ति ?
७. युरोपखण्डे प्रवहन्ती दीर्घा नदी का ?
८. ऐदम्प्राथम्येन मूल्याङ्कस्य विमोचनं केन देशेन कृतम् ?
९. महात्मगान्धिवर्येण स्थापितः प्रथमः आश्रमः कः ?
१०. मानवशरीरे स्थितं बृहत् अङ्गं किम् ?
११. अस्माकं देशे ऐदम्प्राथम्येन जाता हरितक्रान्तिः कं सस्यम् आधारीकृत्य प्रवृत्ता ?
१२. सः राजा कः, येन च शकवर्षम् आरब्धम् ?
१३. आधुनिकस्य इटलीदेशस्य जनकः कः ?
१४. भारते खनिजाङ्गारस्य उत्पादनं कस्मिन् राज्ये अधिकम् अस्ति ?
१५. बुद्धः कुत्र निर्वाणावस्थां प्राप्तवान् ?
१६. 'ब्यू चीप्' नाम किम् ?
१७. चलच्चित्रमन्दिररहितः देशः कः ?
१८. 'क्विट् इण्डिया' - आन्दोलनस्य आरम्भः कदा अभवत् ?

## उत्तराणि

१. न्यूजिलण्ड् ।
२. १९८५ तमे वर्षे ।
३. गुरुग्रहः ।
४. सर् एड्विन् लुटिन्स्वर्येण ।
५. अमरावती ।
६. मद्रास्प्रदेशस्य पेरम्बुदूरुनगरे ।
७. ओल्गा नदी ।
८. ग्रेट् ब्रिटन् देशेन ।
९. फिनिक्स् फार्म । एषः दक्षिण-आफ्रिकासमीपस्थे डर्बन्प्रदेशे अस्ति ।
१०. मूत्रकोषः ।
११. गोधूमम् आधारीकृत्य ।
१२. कनिष्कः ।
१३. ग्यारीबाल्डीवर्यः ।
१४. बिहारराज्ये ।
१५. कुशीनगरे ।
१६. सक्रमम् अभिवृद्धिं प्राप्यमाणायाः सुस्थिरायाः संस्थायाः पेर् ।
१७. सौदी अरेबिया ।
१८. १९४२ तमे वर्षे अगस्ट्मासे ।



# राक्षसात् मुक्तिः

श्रीरङ्गपुरे वीरभद्रनामकः कश्चित् निवसति स्म । तस्य गृहे तदीया पत्नी, त्रयः पुत्राः, द्वे पुत्र्यौ च आस्ताम् । ज्येष्ठपुत्रात् सोमनाथात् ऋते अन्ये सर्वे अपि परिश्रमेण कार्यं कुर्वन्ति स्म । तथापि वीरभद्रस्य गृहसदस्यानाम् एकभोजनप्राप्तिः अपि महते क्लेशाय भवति स्म ।

सोमनाथः गृहे किमपि कार्यं न करोति स्म । किन्तु त्रयाणाम् आहारम् एकः एव खादति स्म । एतस्मात् सोमनाथः नितरां स्थूलः जातः आसीत् । सः सदा निद्रां करोति स्म अपि । गृहसदस्यैः महता परिश्रमेण सम्पादितं धनं सर्वं सोमनाथस्य आहारार्थं वस्त्रार्थं चैव व्ययितं भवति स्म ।

कदाचित् चन्द्रनाथनामकः नगरवासी कश्चित् श्रीरङ्गपुरम् आगतवान् । चन्द्रनाथः वीरभद्रस्य दूरबन्धुः । सः वीरभद्रं बोधितवान् - ''महान्तं परिश्रमं वहन् अपि भवान् अत्र महत् कष्टम् अनुभवन् अस्ति । एतदेव कार्यं यदि नगरे क्रियते तर्हि प्रभूतं धनं सम्पाद्य सुखेन जीवितुं शक्यते'' इति ।

चन्द्रनाथस्य एतत् वचनं वीरभद्राय अरोचत । अतः तदीयं कुटुम्बं दिनद्वयस्य अनन्तरं नगरं प्रति प्रयाणम् अकरोत् । किञ्चिद्दूरं गमनानन्तरम् अरण्यं प्राप्तं तैः । अरण्यमार्गेण एव ते अग्रे गतवन्तः । तावता अन्धकारः प्रसृतः । अतः महावृक्षस्य अधः उपविश्य आनीतम् आहारं खादितुम् इच्छन्तः ते आहारपेटिकाम् उद्घाटितवन्तः । सोमनाथस्य तु चलनाभ्यासः सर्वथा न आसीत् । इदानीं बहुदूरं यावत् चलनेन नितरां श्रान्तः आसीत् सः । आहारपेटिकायाः उद्घाटनसमनन्तरं सोमनाथः समग्रम् आहारं खादित्वा जलं पीतवान्, सशब्दं घोरिकां कुर्वन् निद्रां कृतवान् च ।

ज्येष्ठपुत्रस्य एतस्मात् व्यवहारात्

वीरभद्रः नितरां कुपितः । तं ताडयितुम् उद्युक्तः अपि सः । किन्तु पत्नी पुत्रस्य ताडनात् पतिं निवारितवती ।

वीरभद्रः - "इदानीम् अस्माकं बुभुक्षानिवारणं कथम् ? अत्र परितः फलभरिताः वृक्षाः अपि न सन्ति । जलपानार्थं तटाकान्वेषणम् अपि महते क्लेशाय एव अस्मिन् अन्धकारे" इति उक्तवान् खेदेन ।

"भवान् स्वस्य बुभुक्षानिवारणविषये चिन्तयन् अस्ति । मम तु क्रूरमृगेभ्यः एव भयम्" इति उक्तवती वीरभद्रस्य पत्नी ।

क्रूरमृगाणां नामश्रवणमात्रेण पुत्राः नितरां भीताः । रात्रौ कथमपि कष्टेन प्रयाणं कृत्वा वा एतस्मात् अरण्यात् निर्गन्तव्यम् इति चिन्तितवन्तः ते । किन्तु प्रयत्नेन उत्थापितं चेदपि सोमनाथः न उत्थितवान् एव ।

"हुँ, अलसः एषः न उत्तिष्ठति । एतम् अत्रैव परित्यज्य अग्रे गच्छाम वयम्" इति तिरस्कारभावेन उक्तवान् वीरभद्रः ।

किन्तु पुत्रम् एकाकिनं परित्यज्य गमनं पत्नी न अङ्गीकृतवती । इतरे पुत्राः अपि न अङ्गीकृतवन्तः । एतद्विषये एव महती चर्चा प्रवृत्ता । तस्मिन् एव समये वृक्षशाखातः काचित् गोणी पतिता । सा च गोणी सहस्राधिकैः सुवर्णनाणकैः पूर्णा आसीत् । तां गोणीं दृष्ट्वा वीरभद्रः चिन्तितवान् यत् एतेन धनेन श्रीरङ्गपुरे क्षेत्रं क्रीत्वा सुखेन जीवितुं शक्यते इति ।

पत्युः एतत् चिन्तनं ज्ञात्वा पत्नी -



"एतत् धनं कस्य स्यात् ? वृक्षे कोऽपि स्यात् वा... इति यावत् वदन्ती आसीत् तावता कश्चित् वृक्षात् उत्प्लुत्य अधः आगतवान् । कृष्णवर्णीयः सः दृढकायः आसीत् ।

"एतत् धनं मदीयम् । मम नियमः यदि भवद्भिः अङ्गीक्रियते, तर्हि एतत् धनं भवद्भ्यः दास्यामि" इति उक्तवान् सः दृढकायः ।

"वदतु तावत् । कः नियमः भवतः ?" इति पृष्टवान् वीरभद्रः ।

तदा दृढकायः उक्तवान् - "भवत्सु अन्यतमः मम वशः भवेत्" इति ।

"कः आवश्यकः ? वदतु तावत्" इति उक्तवान् वीरभद्रः ।



दृढकायः सोमनाथम् इष्टवान् ।

'दृढकायेन अलसः सोमनाथः पृष्टः इति यत् तत् अस्माकं हिताय एव जातम्' इति चिन्तयन् वीरभद्रः तत्क्षणम् एव तस्य प्रस्तावम् अङ्गीकृतवान् ।

किन्तु तस्य पत्नी तु - ''झटिति कथम् अङ्गीकरणम् ? एषः मनुष्यः कः ? एषः अस्माकं पुत्रं किं करोति ? कुत्र नयति इति प्रष्टव्यं खलु !'' इति पतिम् उक्तवती ।

तदा सः दृढकायः उक्तवान् - ''तत्सर्वं भवतां न आवश्यकम् । पुत्रस्य दानं भवद्भिः अङ्गीकृतम् अस्ति । तदनुसारं धनं स्वीकृत्य इतः निर्गम्यताम्'' इति ।

''सन्ध्यनुगुणम् एव व्यवहराम वयम् । किन्तु मदीयं पुत्रं सोमनाथं भवान् कुत्र नेष्यति, किं करिष्यति इति वदतु तावत् । तत् श्रुत्वा इतः वयं निर्गच्छामः'' इति उक्तवान् वीरभद्रः ।

''उक्तं चेत् भवतां दुःखं भवति । अतः भवद्भिः न ज्ञायते चेत् एव वरम्'' इति उक्तवान् दृढकायः ।

''किन्तु पुत्रः कुत्र नीयते इति वक्तव्यम् एव'' इति वीरभद्रस्य पत्नी अनुरोधपूर्वकम् उक्तवती ।

तदा सः दृढकायः उक्तवान् - ''वस्तुतः अहं कश्चन राक्षसः । यदि निजवेषेण अहं भवतां दृष्टिगोचरः भवेयं, तर्हि भवन्तः भीताः भवेयुः इति कारणतः अहं मदीयं राक्षसरूपं न दर्शितवान् । मानवाः एव मम आहाराः । किन्तु ममापि केचन नियमाः सन्ति । अतः अहं मानवान् मारयित्वा एव खादिष्यामि'' इति ।

एतत् श्रुत्वा वीरभद्रस्य पत्नी उच्चैः रोदनम् आरब्धवती । पत्न्याः रोदनात् आर्द्रहृदयः वीरभद्रः दृढकायात् स्वीकृतं धनं तस्मै एव प्रत्यर्प्य सोमनाथं मोचयितुम् उद्युक्तः । किन्तु दृढकायः एतत् न अङ्गीकृतवान् । तदा तद्गृहसदस्याः सर्वे अपि एकैकशः दृढकायम् उक्तवन्तः यत् सोमनाथं परित्यज्य मां खादतु इति ।

तेषां वचनस्य अनङ्गीकारपूर्वकं शिरः चालयन् दृढकायः उक्तवान् - ''भवन्तः सर्वे कृशकायाः सन्ति । भवतां खादनेन मम दन्तानाम् एव वेदना भवेत्, न तु मम बुभुक्षा शाम्यति । दृढकायः सोमनाथः

वार्ताविशेषः -

# पोलियोरहितः प्रपञ्चः

लघुबालान् आजीवनं विकलाङ्गान् करोति पोलियोव्याधिः । पोलियोव्याधिग्रस्तानां बालकानां कष्टं तावत् वर्णनातीतम् । अनारोग्यकर-वातावरणे विद्यमानाः व्याधेः कृमयः यदा शरीरं प्रविशन्ति, तदा कशेरुके विश्रधिः भवति । ततः रोगाणवः नाडीमण्डलं प्रविश्य स्नायूनां नियन्त्रणशक्तिं नाशयन्ति । पोलियोव्याधिग्रस्ताः बालकाः हस्तपादयोः उपयोगं सम्यक् कर्तुं न शक्नुवन्ति । एतस्य व्याधेः निवारणं सर्वथा न शक्यते इति वदन्ति वैद्याः । अतः व्याधेः अनागमनार्थम् जागरूकतायाः आश्रयणमेव उचितम् ।

१९५४ तमे वर्षे अमेरिकादेशीयः जोनस् एड्वर्ड् साक् नामकः कश्चित् सूक्ष्माणुजीविशास्त्रज्ञः पोलियोनिरोधकम् औषधं निर्मितवान् । सूच्यौषधद्वारा निश्चितवयोयुतेभ्यः बालेभ्यः एतत् औषधं दीयते स्म । एतेन औषधेन बहवः बालाः व्याधिग्रहणात् मुक्ताः अभवन् । एतेन प्रपञ्चस्य सर्वेषु भागेषु पोलियोनिवारणं साध्यम् इति भावितवन्तः विज्ञानिनः । किन्तु एतत् 'साक् व्याक्सिन्' औषधं केचन एव प्राप्तुं शक्ताः अभवन् । बहूनां हस्तगतं न अभवत् एतत् औषधम् ।

केषाञ्चित् वर्षाणाम् अनन्तरम् अमेरिकादेशस्य अपरः कश्चित् सूक्ष्माणुजीविशास्त्रज्ञः आल्बर्ट ब्रूस् शाबिन्नामकः अपरं पोलियोनिरोधकौषधं निर्मितवान् । एतत् 'शाबिन् व्याक्सिन्' बहुभिः प्राप्तुं शक्यम् अभवत् । विविधदेशानां सर्वकाराः एतत् औषधम् आनाय्य बालेभ्यः दापयन्ति स्म । एतस्य सेवनक्रमः अपि न कठिनः । बालानां मुखे बिन्दुद्वयपरिमितम् एतत् औषधं स्थापनीयम् । किन्तु एतस्य सेवने अयं नियमः अस्ति यत् जन्मनः तृतीयवर्षाभ्यन्तरे एव एतस्य औषधस्य सेवनं भवेत् । तदपि निश्चितपद्धत्या निश्चितसमये स्थापितं स्यात् ।

शतकद्वयात् पूर्वं प्रसृतस्य साङ्क्रामिकस्य शीतलारोगस्य निवारणार्थम् अपि एतादृशः एव प्रयत्नः कृतः आसीत् । १९९५ तमवर्षात् पूर्वं मार्कि १४ देशाः आत्मानं पोलियोरहितत्वेन घोषितवन्तः सन्ति । अन्यैः सप्ततिदेशैः पोलियोनिर्मूलनार्थं प्रयत्नः क्रियमाणः अस्ति । तेषु भारतम् अपि अन्यतमम् ।

आहत्य प्रपञ्चे यावन्तः पोलियोग्रस्ताः सन्ति, तेषु अर्धाधिकाः भारते एव सन्ति । अतः सर्वेषां दृष्टिः भारतस्योपरि अस्ति । एतां परिस्थितिम् अवगत्य भारतीयसर्वकारेण अपि पोलियोनिर्मूलनार्थं काचित् योजना स्वीकृता आसीत् । डिसेम्बर् ९, जनवरी २० इत्येतत् दिनद्वयं 'पोलियोनिरोधकदिनम्' इति घोषितम् आसीत् । 'एतयोः दिनयोः शिशून् समीपस्थं निःशुल्कम् आरोग्यशिबिरं प्रति कृपया नयन्तु' इति पोषकाः प्रार्थिताः आसन् सर्वकारेण । तत् बिन्दुद्वयपरिमितं पोलियोनिरोधकम् औषधं प्राप्तुम् अर्हाः ७५० लक्षबालाः सन्ति अस्माकं देशे । गते डिसेम्बर्नवमे दिनाङ्के बहुंशबालेभ्यः एतत् औषधं दत्तम् आसीत् । जनवरी - २० दिनाङ्के पुनरपि पोलियोनिरोधकम् औषधं व्यापकरूपेण वितीर्णम् । डिसेम्बर्नवमे दिनाङ्के यैः बालैः औषधं स्वीकृतं तैः पुनः अपि जनवरी - २० दिनाङ्के औषधं स्वीकरणीयम् इति प्रचारः कृतः आसीत् । परिणामः उत्तमः एव आसीत् इति वक्तुं शक्यते ।

सर्वकारीयसंस्थाभिः सह सर्वकारीयेतराभिः संस्थाभिः अपि एतस्य कार्यक्रमस्य यशस्वितायै प्रयत्नः कृतः अस्ति । यदि एषः कार्यक्रमः वर्षत्रयं यावत् एवमेव अनुवर्तेत तर्हि अस्माकं देशः अपि पोलियोरहितः भवेत् इति सर्वेषाम् अभिप्रायः अस्ति ।

एतं विषयं भवन्तः अपि भवदीयान् स्नेहितान्, मातापितॄन्, प्रतिवेशिनः च निवेदयन्तु । प्रपञ्चे विद्यमानं पोलियोव्याधिं समूलम् उत्पाटयितुं सहकुर्वन्तु च ।



# अपेक्षा आवश्यकता च

एकस्यां रात्रौ काशीराज्यस्य महाराजः वेषपरिवर्तनं कृत्वा भ्रमणं कुर्वन् आसीत् । प्रयाणसमये कुत्रचित् सः पतितवान् । तदा पार्श्वे एव स्थितः कश्चन निर्धनः तम् उन्नीय कस्यचित् वृक्षस्य अधः नीतवान् । सः निर्धनः महाराजस्य औषधोपचारं कृतवान् ।

किञ्चित्कालानन्तरं महाराजस्य वेदना न्यूना जाता । सन्तुष्टः सः निर्धनं कृतज्ञताम् उक्तवान्, तस्य योगक्षेमं विचारितवान् च ।

तदा निर्धनः उक्तवान् - ''अहं तु निर्धनः अस्मि । मम जीवने विशेषः कोऽपि न भवति'' इति ।

''विशेषः नास्ति चेदपि अपेक्षा काचित् भवेत् एव खलु ! भवतः अपेक्षाम् अहं पूर्णां करिष्यामि । अतः भवान् स्वस्य अपेक्षां वदतु तावत्'' इति राजा उक्तवान् ।

निर्धनः उक्तवान् - ''मम अपेक्षा किं पूरयितुं शक्यते भवता ? तां पूरयितुं सर्वथा न शक्नुयात् भवान् । यतः मम अपेक्षा अस्ति यत् अहम् एतस्य राज्यस्य महाराजः भवेयम् इति'' इति ।

तदा महाराजः उक्तवान् - ''केचन धनस्य, केचन कीर्तेः भोगस्य च अपेक्षां कुर्वन्ति । परन्तु राजा एतेभ्यः दूरे भवति । एतत् भवान् जानाति किल !'' इति ।

निर्धनः आश्चर्येण पृष्टवान् - ''तत् कथम् ?'' इति ।

''महाराजस्य समीपे धनं भवति । परन्तु तत् प्रजानां सम्पत्तिः भवति । महाराजस्य कीर्तिः भवति । तदपेक्षया अधिका अपकीर्तिः अपि भवति तस्य । भोगवस्तूनि तत्समीपे भवन्ति । परन्तु तदपेक्षया महान् कर्तव्यभारः अपि भवति तस्य । अतः यथा एतैः त्रिभिः सामान्यजनाः सुखम् अनुभवन्ति तथा महाराजः सुखं न

सुन्दरः अपि । अतः अहं सोमनाथम् एव इच्छामि'' इति ।

एतत् श्रुत्वा वीरभद्रः, तदीयाः पत्नीपुत्रादयः च उच्चस्वरेण रोदनम् आरब्धवन्तः । तदा राक्षसः अट्टहासं कुर्वन् - ''उच्चैः क्रन्दनं कुर्वन्तु । भवतां रोदनात् एषः सोमनाथः उत्तिष्ठतु नाम । यतः निद्रां कुर्वन्तं जनं खादितुं न इच्छामि अहम्'' इति ।

तत्क्षणे एव ते रोदनं स्थगितवन्तः । राक्षसः सोमनाथं दृष्टवान् । सः तु गाढनिद्रायां मग्नः आसीत् ।

'एतस्य व्यवहारेण भासते यत् प्रातःकालपर्यन्तम् अपि एषः न उत्तिष्ठेत् इति । किन्तु मम नियमानुसारं प्रातःकालात्पूर्वम् आहारसेवनं करणीयम् । इदानीं किं करोमि ?' इति बहुधा चिन्तितवान् राक्षसः ।

'सूर्योदयपर्यन्तम् अपि सोमनाथः न उत्तिष्ठति । सः अभ्यासः तस्य । अतः तदीयाः प्राणाः रक्षिताः भवन्ति' इति चिन्तयन्तः वीरभद्रस्य गृहसदस्याः अतीव सन्तुष्टाः ।

किन्तु राक्षसः स्वप्रयत्नं न त्यक्तवान् । सः अरण्यं गत्वा चतुरः गजान् कोपयित्वा आनीतवान् । ते गजाः घीङ्कुर्वन्तः वृक्षान् परितः इतस्ततः अटितवन्तः । तथापि सोमनाथस्य जागरणं न जातम् ।

राक्षसः पुनरपि अरण्यं गतवान् । सिंहद्वयम् आनीय तयोः पुच्छं पुटीकृतवान्।



एतस्मात् वेदनां सोढुम् अशक्तौ तौ सिंहौ क्रन्दनं कृतवन्तौ । तस्मात् अरण्यं प्रतिध्वनितम् अभवत् । एतस्मात् अपि सोमनाथः न जागरितः । राक्षसः पुनः अरण्यं गत्वा द्वौ वन्यमार्जारौ गृहीत्वा आनीतवान्, सोमनाथस्य पार्श्वे एव तौ मार्जारौ स्थापयित्वा तयोः कलहम् उत्पादितवान् । किन्तु एतेन अपि किमपि प्रयोजनं न जातम् ।

तदा अनन्यगतिकः राक्षसः स्वस्य राक्षसवेषेण एव नृत्यम् आरब्धवान् । एतस्मात् अपि सोमनाथः किञ्चिदपि न विचलितः ।

तावता प्रातःकालः जातः । तदा राक्षसः मनुष्यरूपं धृत्वा वीरभद्रम् उक्तवान् -

''इदानीं भवन्तः स्वग्रामं गन्तुम् अर्हन्ति । किन्तु नियमानुसारं सोमनाथः मह्यम् अर्पणीयः। अन्यथा मदीयं धनं प्रत्यर्पणीयम्'' इति ।

''स्वीकरोतु भवदीयं धनम्'' इति उक्तवती वीरभद्रस्य पत्नी ।

''नैव । सकृत् सन्धिः अङ्गीकृतः चेत् अनन्तरं किं करणीयम् इति निर्णेता अहं, न तु भवन्तः'' इति उक्त्वा राक्षसः ततः निर्गतवान् ।

किञ्चित्कालानन्तरं सोमनाथः यदा जागरितः, तदा तस्य माता प्रवृत्तं सर्वं पुत्रं निवेद्य - ''कुत्रापि कानिचन दिनानि स्थित्वा आगच्छतु भवान्'' इति उक्तवती ।

तदा सोमनाथः आश्चर्येण - ''अम्ब ! धनस्य अभावे सत्यपि मां स्वसमीपं स्थापितवन्तौ भवन्तौ । किन्तु इदानीं धनप्राप्तिसमनन्तरं मां प्रेषयन्ती अस्ति खलु भवती !'' इति उक्तवान् ।

तदा सोमनाथस्य माता उक्तवती - ''भवान् अस्माभिः सह एव तिष्ठति चेत् अस्माभिः धनसङ्ग्रहणं न शक्यते । राक्षसस्य धनं व्ययितव्यं भवति । किन्तु तथा करणं विपदः आह्वानम् इव । अतः कानिचन दिनानि भवान् कुत्रापि निलीय तिष्ठतु । तेन वयं राक्षसात् मुक्तिं प्राप्तुं शक्नुमः'' इति ।

किन्तु सोमनाथः मातुः वचनं न लक्षितवान् । अपि तु सः मातापितृभ्यां सह एव वसन् आलस्यं परित्यज्य परिश्रमेण कार्यं कृतवान् । तस्मात् तस्य आहार-व्यामोहः क्रमशः न्यूनः जातः । स्थौल्यम् अपि न्यूनं जातम् । इतरे इव सोऽपि कृशकायः जातः ।

एकवर्षानन्तरम् आगतः राक्षसः कृशकायं सोमनाथं दृष्ट्वा - ''एतस्य कृशकायस्य खादनेन मम न किमपि प्रयोजनम्'' इति उपहासपूर्वकं वदन् आत्मना दत्तं धनं प्रतिस्वीकृत्य गतवान् ।

राक्षसस्य सन्धितः मुक्तिं प्राप्तवन्तः वीरभद्रः, तदीयाः गृहसदस्याः च अतीव सन्तुष्टाः ।







# राज-राजर्षिभेदः

पूर्वं काशीराज्यं वसन्तसेनो नाम राजा पालयति स्म । सः आत्मानं प्रजासेवकं भावयति स्म । अतः सः राजवैभवात् दूरे आसीत् ।

काशीराज्यस्य राजान्तःपुरभवनं विशालम् आसीत् । तस्मिन् पञ्चाशत् प्रकोष्ठाः, एका नाट्यशाला, पञ्च स्नानगृहाणि च आसन् । भवनस्य स्वच्छतानिमित्तम् एव शतं सेवकाः, पञ्चाशत् परिचारकाः च आसन् । ते सर्वे भवनं सुन्दरं शुभ्रं च स्थापयन्ति स्म । विंशतिः योधाः अहर्निशं तस्य भवनस्य रक्षणं कुर्वन्ति स्म ।

यदा वसन्तसेनः राजा अभवत् तदा राजान्तःपुरं कलाकेन्द्ररूपेण परिवृत्तम् अभवत् । तत्र कलाकारेभ्यः शिक्षणं दीयते स्म । राज्ये विदेशे च विद्यमानाः प्रसिद्धाः कलाकाराः आगत्य तस्मिन् भवने किञ्चित्कालं स्थित्वा तत्रत्येभ्यः कलाकारेभ्यः सङ्गीतं, नृत्यं, चित्रलेखनं, कविता इत्यादिकलाः बोधयन्ति स्म ।

वसन्तसेनः दुर्गे विद्यमाने कस्मिंश्चित् लघुगृहे वसति स्म । तस्य गृहे अमूल्यं वस्तु किमपि न आसीत् । सामान्यजीवनार्थं यावत् आवश्यकं तावत् एव वस्तुजातम् आसीत् तस्य गृहे ।

एवं सति कदाचित् कदम्बराज्यस्य राजकुमार्याः इन्दुमत्याः स्वयंवरः निश्चितः अभवत् । तदा वसन्तसेनः अपि तत्र गतवान् । तस्य सौन्दर्यं दृष्ट्वा नितरां सन्तुष्टा इन्दुमती तस्य कण्ठे वरणमालाम् अर्पितवती ।

तदा वसन्तसेनः इन्दुमत्याः पितरं विनयेन उक्तवान् – ''कदम्बप्रभो ! मम एका प्रार्थना अस्ति । एषा एतस्मात् क्षणात् मम पत्नी । अतः भवता वैभवं विना



निराभरणा एव एषा मया सह मम राज्यं प्रति प्रेषणीया । उपायनं किमपि अहं न इच्छामि'' इति ।

तदा इन्दुमत्याः पिता उक्तवान् - ''पुत्र्यै उपायनदानम् अस्माकं सम्प्रदायः । अतः भवान् तस्य निराकरणं मा करोतु कृपया'' इति ।

एतत् श्रुत्वा वसन्तसेनः उक्तवान् - '' ''प्रजानां सम्पत्तिम् अहम् उपायनरूपेण सर्वथा न स्वीकरोमि । यदि भवता स्वपरिश्रमेण सम्पादितं धनं किमपि स्यात् तर्हि तत् भवान् इन्दुमत्यै उपायनरूपेण दातुम् अर्हति'' इति ।

तदा इन्दुमत्याः पिता पृष्टवान् - ''भवान् अपि राजा खलु ! किं भवतः राज्यं परिश्रमेण अर्जितम् ? किं तत् पितृपरम्पराप्राप्तं न ?'' इति ।

वसन्तसेनः उक्तवान् - ''काशीराज्यं मम पित्रा स्वशक्तिसामर्थ्येन एव सुदृढीकृतम् । तदेव राज्यं सः मह्यं दत्तवान् । तस्य राज्यस्य संरक्षणार्थं बाल्यतः एव अहं शिक्षणं प्राप्तवान् अस्मि । यदा राजा अभवं तदा अहं राज्यभारनिर्वहणकार्यमात्रं स्वीकृतवान्, न तु राज्यसम्पत्तिम् । मम जीवनं प्रजानां सेवायै एव । अतः प्रजानां सेवा या क्रियते तदर्थं किञ्चिन्मात्रं वेतनं स्वीकरोमि । ततः जीवनं निर्वहामि च'' इति ।

एतत् श्रुत्वा आगताः सर्वे राजानः परिहासपूर्वकम् उक्तवन्तः - ''अद्य आरभ्य इन्दुमती काशीमहाराजस्य महाराज्ञी न, अपि तु काशीराज्यस्य सेविका'' इति ।

तदा इन्दुमत्याः पिता कोपेन - ''इन्दुमतीम् अहं प्रीत्या पोषितवान् । वैभवपूर्णे परिसरे वर्धिता मम पुत्री भवता सह सुखेन न जीवेत् । भवतः विषयम् इन्दुमती पूर्वमेव न ज्ञातवती । अतः दोषं कृतवती । भवान् संन्यासी अस्ति । मम पुत्रीं परिणीय तस्याः जीवनं दुःखमयं कृतवान् भवान् । किम् एतत् उचितम् ?'' इति वसन्तसेनं पृष्टवान् ।

अत्रान्तरे इन्दुमती पितुः आशयं निराकुर्वती - ''तात ! मम निर्णयः अनुचितः न । पाणिग्रहणं जातं चेत् विवाहः अपि जातः इव । पत्युः अनुसरणं पत्न्याः

मम कर्तव्यम् । अतः अहं मम पत्या सह गच्छामि एव । मम आनुकूल्यं यथा स्यात् तथा तस्मिन् परिवर्तनम् आनेतुं प्रयत्नं करिष्यामि । यदि तथा कर्तुं न शक्यते तर्हि अहम् आत्मानम् एव परिवर्तयिष्यामि । एतावत् तु निश्चयेन वदामि यत् आवयोः दाम्पत्यजीवनं सुखमयं भविष्यति इति'' इति पितरम् उक्तवती ।

अनन्तरं वसन्तसेनः इन्दुमती च काशीराज्यं प्राप्तवन्तौ । तत्र इन्दुमती स्वगृहं दृष्ट्वा पतिं पृष्टवती - ''एतत् महाराज्ञ्याः वासयोग्यं गृहं वा ? किम् अत्र वासः शोभेत ?'' इति ।

तदा वसन्तसेनः हसन् उक्तवान् - ''यः पुरुषः शासनं करोति सः महाराजः इति उच्यते । शासनभारनिर्वाहिका महिला महाराज्ञी इति उच्यते । अतः भवती न महाराज्ञी, अपि तु महाराजस्य पत्नी । तत् मा विस्मरतु । एतस्मै भवनाय प्रतिमासं भाटकं दातव्यम् । परिचारकेभ्यः रक्षकेभ्यः च वेतनं दातव्यम् । मया वेतनत्वेन यावत् प्राप्यते [illegible] धनेन एव एतत् सर्वं निर्वोढव्यम् । अतः बृहद्भवने वापः सर्वथा असम्भवः'' इति ।

इन्दुमत्यै एतत् वचनं न अरोचत । तथापि पत्युः सौन्दर्यातिशयं स्मरन्ती सा सर्वं सोढवती । तस्मिन् गृहे एकः सेवकः, एका सेविका, एकः रक्षकः च आसीत् । एतेषां साहाय्येन सर्वाणि कार्याणि कारयन्ती सा दिनानि यापितवती ।

एकदा सा वसन्तसेनम् उक्तवती - ''भवतः अनुपस्थितौ अत्र मम नीरसता





भवति। अत्र सख्यः न सन्ति। मनोरञ्जनसाधनानि अपि न सन्ति। अतः अत्र कालयापनं महते क्लेशाय'' इति।

तदा वसन्तसेनः उक्तवान् -''समययापने क्लेशः चेत् ग्रन्थालयं गत्वा अध्ययनं करोतु। अस्माकं ग्रन्थालये बहूनि उत्तमानि पुस्तकानि सन्ति। अथवा काञ्चित् नूतनविद्यां वा जानातु। तेन भवत्याः नीरसता अपगच्छेत्'' इति।

एवमेव एकं वर्षम् अतीतम्। एतदभ्यन्तरे एतादृशं जीवनं सह्यतां गतम् आसीत्। तथापि पतिः यदा न भवति स्म तदा इन्दुमत्याः असन्तुप्तिः भवति स्म।

वसन्तसेनः अपि शासने दक्षः आसीत्। सः मन्त्रिणां, सर्वेषां राजोद्योगिनां च शासनादिव्यवहारं परिशीलयन्, परिष्कुर्वन् च प्रजानां हितार्थं विविधाः योजनाः क्रियान्विताः करोति स्म। समर्थः राजा एव अल्पं वेतनं स्वीकृत्य कार्यं करोति इति कारणतः अन्ये अपि तदपेक्षया न्यूनं वेतनं स्वीकृत्य कार्यं कुर्वन्ति स्म।

कदाचित् विनायकः नाम कश्चित् तपस्वी वसन्तसेनं द्रष्टुम् आगतवान्। तदा वसन्तसेनः तस्य आतिथ्यं कृतवान्। एतस्मात् सन्तुष्टः विनायकः स्वस्य आगमनस्य उद्देशम् उक्तवान् - ''अहं बहुभ्यः वर्षेभ्यः हिमालये तपः कुर्वन् अधिकं तपोबलं सम्पादितवान् अस्मि। कदाचित् भगवान् प्रत्यक्षः भूत्वा माम् उक्तवान् - 'भवान् प्रजानां हितमेव इच्छतः राज्ञः इच्छां पूरयित्वा आगच्छतु। अनन्तरं भवन्तं मोक्षेण अनुग्रहीष्यामि' इति। ततः अहं तादृशं महाराजम् अन्विष्यन् सर्वत्र अटितवान्। परन्तु एतावत्पर्यन्तं योगीश्वरनामकात् राजर्षेः ऋते कोऽपि न दृष्टः आसीत् मया। यदा अहं तस्य राजर्षेः पुरतः इच्छापूरणप्रस्तावम् उपस्थापितवान् तदा सः माम् उक्तवान् - 'तपस्विन्! अहं राजर्षिः अस्मि। मम इच्छा कापि नास्ति। मम राज्यं सर्वदा समृद्धं भवेत् इत्येव मम आशा। परन्तु काशीराज्यस्य राजा वसन्तसेनः मम अपेक्षया अधिकतया प्रजाहितं चिन्तयति इति श्रूयते। अतः भवान् तस्य मेलनं कृत्वा अग्रे किं करणीयम् इति निर्णयं स्वीकरोतु' इति।

अतः एव अहं भवतः समीपम् आगतवान् अस्मि'' इति ।

एतत् सर्वं श्रुत्वा वसन्तसेनः किञ्चित् विचिन्त्य उक्तवान् - ''मुनिवर्य ! मम राज्यं सुसमृद्धं भवेत् इति चिन्तयन् अहं कर्तव्यबुद्ध्या राज्यपालनं करोमि । मम दक्षताकारणतः एतत् कर्तव्यं विना विघ्नं निरुह्यते मया । तदर्थम् अल्पं वेतनं प्राप्नुवन् अहं तृप्तिं प्राप्नोमि । किन्तु मम पत्न्याः असन्तोषः मयि कदाचित् खेदं जनयति । मम अनुपस्थितेः, भोग-साधनानाम् अभावात् च सा खिन्ना भवति। यदि भवतः अनुग्रहसामर्थ्यं स्यात्, अहं च यदि अनुग्रहयोग्यः स्यां, तर्हि यथायोग्यं वरेण अनुग्रहीतुम् अर्हति भवान्'' इति ।

तदा विनायकमुनिः मन्दहासपूर्वकम् एकां पाञ्चालिकां वसन्तसेनाय दत्त्वा उक्तवान् - ''राजन् ! अद्य आरभ्य एषा पाञ्चालिका भवतः इच्छां पूरयिष्यति । परन्तु भवान् एकः एव एतस्याः उपयोगं कर्तुं शक्ष्यति'' इति ।

तदा वसन्तसेनः आश्चर्येण पृष्टवान् - ''मुनिवर्य ! निःस्वार्थतायां राजर्षेः योगीश्वरस्य अपेक्षया श्रेष्ठः अहं न । तथापि भवान् किमर्थं मह्यम् एतं वरं दत्तवान् ?'' इति ।

तदा विनायकः हसन् उक्तवान् - ''योगीश्वरः राजर्षिः अस्ति । तस्य इच्छा कापि नास्ति । अतः सः विलासजीवनतः दूरे भवति चेत् न तत्र आश्चर्यम् । भवान् तु प्रामाणिकः समर्थः महाराजः । यद्यपि विलासजीवने भवतः इच्छा अस्ति, तथापि भवान् राजधनस्य उपयोगं न करोति । यतः भवान् चिन्तयति यत् प्रजानां सम्पत्तेः उपयोगार्थं मम अधिकारः नास्ति इति । अतः भवान् संयमेन प्रामाणिकतया च शासनकार्यं निर्वहति । एतस्मात् कारणात् वरं स्वीकर्तुं भवान् एव अर्हः'' इति ।

अनन्तरं वसन्तसेनः पाञ्चालिकायाः साहाय्येन सकलवैभवसुखम् अनुभवन्, प्रजानां हितं च चिन्तयन् उत्तमरीत्या शासनं कृतवान् ।



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां मे - १९९६ मासे प्रकटयिष्यामः ।


Tajy Prasad


Aruna Nistala

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च् - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - एतस्य अलङ्कारः उदरम्भरणार्थम् ।
द्वितीयचित्रम् - एते अलङ्काराः अन्यभूषणार्थम् ।।

प्रेषकः - श्री राजेन्द्रः, शिबळमने, पो - वाजगोड्ड, ता - सिद्धापुरम् - ५८१३२२ ( उ. क.) कर्णाटकम् ।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते)- रू. ६०-००
विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -
**डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास् - ६०० ०२६**

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

PolioPlus



# IMMUNIZATION AN ASSURANCE OF GOOD HEALTH TO CHILDREN

## VACCINATIONS When and How Many

| Age to Start Vaccination | Name of Vaccine | Name of Disease | How Many Times |
|---|---|---|---|
| Birth | **BCG** | **Tuberculosis** | Once |
| 6 weeks | **Polio** | **Polio** | Three times with intervals of at least one month |
| 6 weeks | **DPT** | **Diphtheria Pertussis (Whooping Cough) Tetanus** | Three times with intervals of at least one month |
| 9 months | **Measles** | **Measles** | Once |

**Babies should receive all vaccinations by the time they are twelve months old.**

Pregnant women should get themselves vaccinated against Tetanus (TT) twice—in an interval of at least one month—during the later stages of pregnancy.

HEALTHY CHILD—NATION'S HOPE & PRIDE

Design courtesy : World Health Organisation

CHANDAMAMA (Sanskrit) March 1996 Regd. No. TN / MS (S) 302



